इत्थं दिग्वन्दनार्था स्यान्मूलमन्त्रस्य संस्थितिः ।
विज्ञेया योगिभिर्दासैः कृतज्ञैः शुभकर्मभिः ॥ १८५ ॥

प्रणवं पूर्वमुच्चार्य [1]मायाबीजं ततः परम् ।
दिग्वाचकं प्रयुञ्जीत चतुर्थ्यन्तं नमः परम् ॥ १८६ ॥

एवं दिग्भ्यः प्रणामं च कृत्वा दासो यथाविधि ।
आचम्याऽथ महायज्ञं वीर्याऽऽरोग्यबलप्रदम् ॥ १८७ ॥
दुष्टभावप्रशमनं चाऽऽयुर्वर्धनमुत्तमम् ।
कुर्याच्च विधिवद्दासः प्रातः काले यथाविधि ॥ १८८ ॥

यज्ञोऽयमस्ति दासानां मुख्यश्च गृहमेधिनाम् ।
मध्यमानां च दासानां तथा सन्यासिनामपि ॥ १८९ ॥

न तथेति हि सिद्धान्तः कल्पाचार्याऽनुशिक्षितः ।
साधारणोऽयं यज्ञः स्यात्सर्वेषामिति योगिराट् ॥ १९० ॥

दाक्षिः प्राह विशेषेण तन्मध्यमगृहस्थयोः ।
दीर्घायुष्कामयोश्चेति भगवान्प्राह जैमिनिः ॥ १९१ ॥

कर्मणा यज्ञमेनं हि मन्यन्ते कल्पकारकाः ।
तमेनं ज्ञानमात्रेण कुर्वन्ति ज्ञानयोगिनः ॥ १९२ ॥

महायज्ञस्य तस्यैवं स्वरूपं ह्यभिवर्ण्यते ।
यथाकलं यथाऽवस्थं कल्पकारैर्महर्षिभिः ॥ १९३ ॥

१. मायाबीजम्, ह्रीं-इति प्रकृति । अत्रैवं, ओं ह्रीं प्राच्यै दिशे नमः, इति मन्त्रस्वरूपं विज्ञेयम् । एवं अन्यादिग्विषयेऽपि ।

यज्ञद्रव्याणि पात्राणि तादृशानि निबोधत ।
गव्यं क्षीरं तथा चाज्यं श्वेताश्चाक्षततण्डुलाः ॥ १९४ ॥

श्वेतार्कसमिधः सप्त दर्व्यौ चेति भवन्ति हि ।
शरावपञ्चकं चैव यज्ञीयं पात्रमुच्यते ॥ १९५ ॥

प्रक्षाल्य पाणिपादं च तथाचम्य यथाविधि ।
शुद्धासने प्राङ्मुखश्च दासस्तिष्ठन्प्रसन्नधीः ॥ १९६ ॥

प्राणानायम्य मन्त्रेण प्रणवेन यथाविधि ।
सङ्कल्प्य च यथार्थं हि [1]सात्विकत्यागपूर्वकम् ॥ १९७ ॥

शरावे मृण्मये शुद्धे मृत्कुण्डे वा च सेन्धने ।
शुद्धमग्निं समुद्दीप्य कुशैः षोडशभिः कृतान् ॥ १९८ ॥

कूर्चांश्च परितश्चाग्निं प्राङ्मुखोदङ्मुखान्क्षिपेत् ।
उत्तरे परिस्तरणात्प्रागग्रांश्चतुरः कुशान् ॥ १९९ ॥

प्रक्षिपेत्तत्र पात्राणि पञ्च चाऽधोमुखानि हि ।
दर्व्यौ च समिधश्चैव निक्षिप्य च यथाक्रमम् ॥ २०० ॥

पश्चिमात्परिस्तरणाद्बहिस्तु चतुरः कुशान् ।
उत्तराग्रान्समास्तीर्य पात्रसंस्कारमाचरेत् ॥ २०१ ॥

प्रथमं पात्रमुद्धृत्य पञ्चपात्रेषु तेषु च ।
तीर्थेन किं चिदापूर्य प्रणवेन हि शोधयेत् ॥ २०२ ॥

१. सात्विकत्यागश्च एतत्प्रबन्धप्रथमभागे १०५ पत्रे प्रतिपादितो दर्श-
नीयः । तत्र कर्मणि प्रकरणानुरोधेन विशेषश्च ज्ञेयम् ।

तदापूर्य पुनस्तीर्थैः प्रणवेनाऽभिमन्त्रयेत्।
दासाश्रमसुसिद्धेन [१]ब्रह्मकूर्चेन तेन हि ॥ २०३ ॥

पञ्चधा पञ्चभिश्चैव कुशैश्च ग्रथितेन च।
उत्तानानि च पात्राणि चत्वार्यद्भिः प्रपोक्षयेत् ॥ २०४ ॥

आत्मानं यज्ञभूमिं च शिष्टतीर्थं महर्षयः।
निधाय दक्षिणे भागे द्वितीयं पात्रमुद्धरेत् ॥ २०५ ॥

तच्च तीर्थेन चाऽऽपूर्य दांसः संस्कृत्य पूर्ववत्।
प्रागग्नेः संनिधायाऽथ तृतीयं पात्रमुद्धरेत् ॥ २०६ ॥

पुरः संस्थाप्य दर्भेषु तच्च तस्मिन्महर्षयः।
आज्यं विलाप्य तच्चाऽपि संस्कुर्यात्पूर्ववत्ततः ॥ २०७ ॥

निधाय तद्वामभागे तुरीयं पात्रमुद्धरेत्।
पूरयित्वा तु तच्चाऽपि क्षीरेण च यथाविधि ॥ २०८ ॥

संस्कृत्य पूर्ववत्तच्च निधायाग्नेश्च दक्षिणे।
ततश्च पञ्चमं पात्रं गृहीत्वा तत्प्रपूरयेत् ॥ २०९ ॥

तीर्थेन साक्षतेनैव संस्कुर्यात्पूर्ववत्ततः।
पात्रस्थाने तु संस्थाप्यं भवेत्पात्रं च तत्पुनः २१० ॥

शुद्धपात्रमिदं प्रोक्तं सर्वशुद्धिकरं भवेत्।
अथ दर्व्यौ समादाय प्रतप्याग्नौ त्रिधा कुशैः ॥ २११ ॥

---

१. ब्रह्मकूर्चं च द्वात्रिंशत्कुशैः कार्यमिति पक्षान्तरं च दृश्यते। एतच्च सर्वेषु कर्मस्वपि विनियुज्यते।

संमृज्य शुद्धतीर्थेन संप्रोक्ष्य च यथाक्रमम् ।
पात्रस्थाने निधायाऽथ गृहीत्वा चाक्षतान्पुनः ॥ २१२ ॥

बद्धाञ्जलिपुटो दासो ध्यात्वा नारायणं गुरुम् ।
मृतसञ्जीविनीरूपां योगदेवीं च भक्तितः ॥ २१३ ॥

ओं ह्रीं रं हुं महादेव नारायण सुरेश्वर ।
अधितिष्ठ शुद्धमग्निमण्डलं रक्ष मां प्रभो ॥ २१४ ॥

इति मन्त्रं समुच्चार्य तथा चाष्टाक्षरं मनुम् ।
अग्नेः प्रतिष्ठां कुर्वीत दासः श्रद्धासमन्वितः ॥ २१५ ॥

तदग्नेरष्टभिश्चैव [१]नामभिः पुण्यलक्षणैः ।
अग्नेः प्राग्दिश आरभ्य चेशान्तं हि समर्चयेत् ॥ २१६ ॥

गृहीत्वा चाथ दर्वीभ्यामाज्यं दासो यथाविधि ।
अग्नौ च जुहुयात्सम्यग्यज्ञमन्त्रमुदीरयन् ॥ २१७ ॥

प्रणवं पूर्वमुच्चार्य मायाबीजं ततः परम् ।
अग्नये चेति शब्दं च चतुर्थ्यन्तं सपल्लवम् ॥ २१८ ॥

स्वाहान्तं च तथोच्चार्य [२]मन्त्रं चामुं प्रकल्पयेत् ।
मन्त्रश्चैवं विधः प्रोक्तो यज्ञाङ्गश्चेति सूरिभिः ॥ २१९ ॥

१. अष्टनामानि—अग्नये नमः, जातवेदसे नमः, सहोजसे नमः, अजिराप्रभवे नमः, वैश्वानराय नमः, नर्यापसे नमः, पङ्क्तिराधसे नमः, विसर्पिणे नमः, इति । ततो यज्ञपुरुषाय नम इति अग्निमर्चयेत्, इत्यप्यत्राऽनुसन्धेयम् ।

२. ओं. ह्रीं. अग्नये नमः स्वाहा, इति तन्मन्त्रस्वरूपं विज्ञेयम् ।

इदं तस्मै न ममेति त्यागवाक्यमुदीरयेत् ।
एवं तद्धोमसंख्या च [1]वसुभिश्चैव कथ्यते ॥ २२० ॥

कृत्वा चैवं हि होमं च दर्व्यौ चैव निधाय हि ।
शुद्धतीर्थमुपस्पृश्य प्राणायामं समाचरेत् ॥ २२१ ॥

करिष्ये क्षीरयज्ञं च बुद्धिवीर्यबलप्रदम् ।
इति सङ्कल्प्य दासश्च सात्विकत्यागपूर्वकम् ॥ २२२ ॥

ब्रह्मकूर्चेन हि क्षीरं [2]जुहुयात्तत्त्वसंख्यया ।
प्रणवं पूर्वमुच्चार्य रमां चाऽथाऽमृताक्षरम् ॥ २२३ ॥

देव्यै मृतसंजीविन्यै चेत्युक्त्वाऽथ क्रमेण हि ।
स्वाहेति चोक्त्वा मन्त्रं हि क्षीरयज्ञमुदीरयेत् ॥ २२४ ॥

एवं तत्क्षीरहोमं च कृत्वा दासो यथाविधि ।
शुद्धतीर्थमुपस्पृश्य प्राणायामं समाचरेत् ॥ २२५ ॥

अथ बद्धाञ्जलिर्दासो मन्त्रमेनं समुच्चरेत् ।
मूलाऽऽधाराऽधिनाथाऽर्च्य पुराण पुरुषोत्तम ॥ २२६ ॥

संभूताऽखिलशत्रुघ्न पाहि मां द्विरदाऽऽनन ।
इति सिद्धं ततश्चेध्मं समादाय यथाविधि ॥ २२७ ॥

शुद्धतीर्थेन संप्रोक्ष्य ह्यभ्यज्याज्येन सर्वतः ।
कराभ्यां संवहन्दासः समन्त्रं जुहुयादिह ॥ २२८ ॥

---

1. अष्टसंख्याभिः ।
2. चतुर्विंशत्संख्यया ।

प्रणवं पूर्वमुच्चार्य [1]सुधां च तदनन्तरम् ।
मायां रमां हरिं चैव ततो वह्निप्रियां तथा ॥ २२९ ॥

इति तद्धोममन्त्रस्य स्वरूपं चाऽभिवर्णितम् ।
एवं कृत्वाऽथ दासश्च शुद्धतीर्थमुपस्पृशन् ॥ २३० ॥

प्रणानायम्य विधिवत्सात्विकत्यागपूर्वकम् ।
योगदेवीमहायज्ञं सर्वाऽभीष्टप्रदायकम् ॥ २३१ ॥

आरोग्यक्षेमदं चैव करिष्ये लोकशर्मणे ।
इति सङ्कल्प्य भावेन शुद्धेन च यथाविधि ॥ २३२ ॥

प्रधानदर्व्या त्वाज्यं हि जुहुयान्मन्त्रपूर्वकम् ।
स्यात्तद्धवनमन्त्रश्च [2]भवेत्तन्मङ्गळाष्टकम् ॥ २३३ ॥

वाक्यमेव सबीजं च स्वाहान्तं परिकथ्यते ।
अथ शुद्धेन तीर्थेन परितो हव्यवाहनम् ॥ २३४ ॥
ओमित्येकाक्षरं जप्त्वा सेचयेच्च प्रदक्षिणम् ।
पुनराज्यं च दर्वीभ्यां गृहीत्वा संजपन्मनुम् ॥ २३५ ॥

१. सुधा, अमृतबीजम्, तच्च सौः-इति स्वरूपं भवति । माया च, ह्रीं-इति बीजम् । रमा, श्रीं-इति बीजम् । हरिः, नारायणस्य देवस्य, अष्टाक्षरो मन्त्रः । वह्निप्रिया, स्वाहा, इति शब्दस्वरूपम् । तथा च प्रकृते-"ओं सौः-ह्रीं-श्रीं-ओं नमो नारायणाय स्वाहा" इति तद्धोममन्त्रस्वरूपं विज्ञेयम् ।

२. मङ्गळाष्टकं च प्रबन्धस्याऽस्य प्रथमभागे-१०२-पत्रे द्रष्टव्यम् ।

समस्तपरिवाराय सर्वदेवस्वरूपिणे ।
नारायणाय देवाय स्वाहेति प्रणवादिकम् ॥ २३६ ॥

तदाज्यं जुहुयाद्वह्नौ दर्वीभ्यां सहधारणम् ।
ततश्च सात्विकत्यागं यथाविधि विधाय च ॥ २३७ ॥

गृहीत्वा प्राक्तोयपात्रं शुद्धतीर्थेन तच्च हि ।
शोधयित्वा[१]ऽऽद्यमन्त्रेण यज्ञशिष्टानि तत्र हि ॥ २३८ ॥

शुद्धतीर्थाज्यक्षीराणि योजयेच्च सशर्करम् ।
गोमूत्रचुळकं चैव सर्वमेतद्यथाविधि ॥ २३९ ॥

ब्रह्मकूर्चेन चालोड्य पञ्चधा प्रणवेन च ।
मन्त्रेण तद्ब्रह्मपात्रं धृत्वा वामकरस्थले ॥ २४० ॥

प्रत्येकं [२]ब्रह्मबीजानां सप्तानां च यथाविधि ।
बीजं समुच्चरन्दासश्चाचमेद्भक्तिभावतः ॥ २४१ ॥

अथ दासः समुत्थाय प्रणमेदग्निमण्डलम् ।
याजकोद्देश्ययोश्चैव भावना च परस्परम् ॥ २४२ ॥

सुखाऽऽवहा च जगतां या सा यज्ञफलं भवेत् ।
सजीवं चैव निर्जीवं यज्ञद्रव्यमिहोच्यते ॥ २४३ ॥

१. आद्यमन्त्रेण, ओं, इत्यनेन ।

२. ब्रह्मबीजानि च—ओं-ह्रीं-श्रीं-क्लीं-सौः-ऐं-क्रीं-इति बीजाध्यायप्रसिद्धानि चाऽत्र विज्ञेयानि ।

क्षीराज्ये च सजीवे स्तो निर्जीवं चेन्धनं भवेत् ।
सजीवं प्राकृतं तेजो निर्जीवं चाऽऽत्मनश्च तत् ॥ २४४ ॥

वृष्टुः संवर्धयतीति भवेत्कल्पकृतां मतम् ।
अतश्च जीवाऽजीवौ च यज्ञे हव्ये प्रकीर्तितौ ॥ २४५ ॥

श्रीमच्च योगविज्ञानं तज्जीवाऽजीवयोरपि ।
महायज्ञफलं चेति नारदादिभिरुच्यते ॥ २४६ ॥

यज्ञमेनं च यो नित्यं दासः कुर्यात्समाहितः ।
१स्वात्मोपदेशादारभ्य मन्त्रार्थज्ञः स्वधर्मतः ॥ २४७ ॥

षण्मासं स पुमान्स्त्री वा मन्त्रसिद्धिं च विन्दति ।
प्रत्यहं क्रियमाणस्य यज्ञस्य तु महत्फलम् ॥ २४८ ॥

कथ्यते कल्पकारैश्च योगिभिश्च महर्षिभिः ।
यथासुखमयं यज्ञः कार्य इत्येव निर्णयः ॥ २४९ ॥

अमावास्या पौर्णिमा च श्रवणं शुक्रवासरः ।
मुख्यः कालश्च भवति दासानां यज्ञकर्मणाम् ॥ २५० ॥

मातृकायोगिनामेव यज्ञोऽयं विहितो भवेत् ।
इति यत्कथ्यते शुद्धैस्तदपि स्यात्समञ्जसम् ॥ २५१ ॥

दासैः सर्वैरयं यज्ञो यथाकालं यथासुखम् ।
यथाशक्ति च शौचेन कर्तव्यश्चेति निश्चयः ॥ २५२ ॥

१. स्वात्मोपदेशश्च-स्वाचार्यदत्तैकाक्षरग्रहणम् , तदारभ्येत्यर्थः.

अथ माध्यान्हिकं दासः श्रद्धया हि समाचरेत् ।
श्रीकालस्य तुरीयाच्च पादादारभ्य तस्य हि ॥ २५३ ॥

माध्याह्निकस्य कालः स्यादिति धर्मभृतां मतम् ।
पार्वत्याश्चोत्तरे भागे सायं सन्ध्यां समाचरेत् ॥ २५४ ॥

यथा वा ह्यान्हिकं प्रोक्तं प्रथमं च तथैव हि ।
सर्वत्र सन्ध्या विहिता समन्त्रा सक्रमाऽन्वहम् ॥ २५५ ॥

अथैवं शयनविधिर्दासानां च निगद्यते ।
समये भद्रकाळ्याश्च समये प्रथमे पुनः ॥ २५६ ॥

शयनं च प्रशस्तं स्याद्देहयन्त्रस्य चात्मनः ।
महाशान्तिप्रदं तच्च ततस्तत्सेव्यमुच्यते ॥ २५७ ॥

अपरस्मिन्दिने चैव सर्वेषां प्राणिनां भुवि ।
विज्ञानं देहसंपत्तिः प्रभुत्वं सर्वकर्मणाम् ॥ २५८ ॥

इन्द्रियाणां च सर्वेषां पाटवं च विशेषतः ।
आरोग्यं चेति सर्वं हि शयनादेव जायते ॥ २५९ ॥

निद्रैव शयनार्थः स्यात्सा च निद्रा महेश्वरी ।
प्राणिनां देहयन्त्रस्य पुष्टिवीर्यबलप्रदा ॥ २६० ॥

इत्थं हि शयनस्थानं कालायसमहर्षिणा ।
वर्णितं स्याद्यथादेशं यथाकलं महर्षयः ॥ २६१ ॥

विशालं निर्मलं श्लक्ष्णं गन्धधूपैश्च वासितम् ।
सुखशय्यासनार्थं च शयनस्थानमुच्यते ॥ २६२ ॥

इति तस्माद्दासजनाः सर्वेऽपि च यथाबलम् ।
यथोचितं यथाशक्ति पश्यन्तु शयनं स्थलम् ॥ २६३ ॥

प्रक्षाल्य पाणिपादं च नवद्वाराणि धर्मतः ।
वासोऽन्यत्परिदधानः परिमृष्टवपुस्तथा ॥ २६४ ॥

निर्मलां सोपधानां च विशालास्तरणान्विताम् ।
शय्यां चाऽधिष्ठितो दासः प्राङ्मुखः प्राञ्जलिश्च सन्॥२६५॥

तानि मङ्गळवाक्यानि निर्बीजानि समुच्चरेत् ।
१अथ मङ्गळगायत्रीं त्रिधा जप्त्वा प्रसन्नधीः ॥ २६६ ॥

तदर्थांश्च परिज्ञाय ध्यायेदात्मानमात्मना ।
तथा देवीं महादेवीं योगदेवीं पराऽवराम् ॥ २६७ ॥

ध्यात्वा रक्षाकरं दिव्यं योगिभिः समुपासितम् ।
श्रीशक्तिकवचं शुद्धं पठेच्छ्रद्धासमन्वितः ॥ २६८ ॥

ओं ह्रीं श्रीं हृत्पुण्डरीकं चात्मस्थानं महेश्वरी ।
शङ्खचक्रधरा पातु जगदंबा हिरण्मयी ॥ २६९ ॥

ओं क्लीं सौः श्रीं प्राणपरा प्राणायामपरायणी ।
भद्रकाळी च मे प्राणान्पातु शङ्करवल्लभा ॥ २७० ॥

पातु नारायणः श्रीमान्शङ्करः पार्वतीपतिः ।
सरस्वतीप्राणनाथो ब्रह्मा पातु जगत्प्रभुः ॥ २७१ ॥

१. मङ्गळगायत्री च-प्रबन्धस्याऽस्य प्रथमभागे-१०४-पत्रे च प्रतिपादिता विज्ञेया ।

सिद्धा महर्षयश्चैव पान्तु मां गगने चराः ।
ओं ब्लूं ह्रिं ह्रिं भद्रमुखा सर्वाङ्गं पातु मे परा ॥ २७२ ॥

इति वेदशिरोरत्नं कवचं च श्रियः पठेत् ।
रक्षाकरमिदं प्रोक्तं पुरा भगवता पुनः ॥ २७३ ॥

एवमुक्त्वाऽथ दासश्च शयीत शुभमानसः ।
निरपेक्षः स्वस्थचित्तो न किंचिदपि चिन्तयन् ॥ २७४ ॥

सरस्वत्याश्च समये द्वितीये नियतात्मवान् ।
उत्तिष्ठेद्दासजनता चेत्येवं विहितं पुरा ॥ २७५ ॥

अथ दासो मध्यमश्च सन्यासी च जितेन्द्रियः ।
तयोरेवमाह्निकं हि नारदादिभिरुच्यते ॥ २७६ ॥

तयोश्च नियमः पूर्वं प्रोक्तो भवति योगिनः ।
तं च वोऽद्य प्रवक्ष्यामि पूर्वाचार्याऽनुशिक्षितम् ॥ २७७ ॥

निवृत्तपितृयज्ञश्च सन्यासी चेति तावुभौ ।
काषायं योगसूत्रं च योगदण्डं कमण्डलुम् ॥ २७८ ॥

निर्दिष्टसमये दत्तं गुरुभिः सत्यगामिभिः ।
यथाविधि यथाकल्पं गृण्हीतां सत्यगामिनौ ॥ २७९ ॥

अनयोर्लक्षणं चाऽस्ति प्रायशः सममेव हि ।
अतः सामान्यमुभयोर्लक्षणं प्रब्रवीम्यहम् ॥ २८० ॥

सुलक्षणं योगमठमधितिष्ठेद्व्रतव्यधः ।
सन्यासी मध्यमो वाऽपि भवेत्सन्यासलक्षणः ॥ २८१ ॥

सार्धं स्वधर्मपत्न्या हि प्राजापत्यमपि त्यजन्।
सङ्गमं जितकामश्च यो भवेद्विदितात्मवान्॥ २८१॥

स्वगोत्रसंरक्षणाय न क्लिष्टो यश्च धार्मिकः।
निर्णीतधनदायादः केवलं रक्षकः स्वयम्॥ २८३॥

लोकाः समस्ताः सुखिनो भवन्त्विति लिखन्स्वयम्।
स्वस्य कक्षपुटे यश्च दासः स्याल्लोकरक्षकः॥ २८४॥

शुद्धाचार्याऽधीनभावः सत्यव्रतपरः शुचिः।
१वामदेवरहस्यार्थगोप्ता यश्च विचक्षणः॥ २८५॥

श्रीमाञ्छुद्धार्यसिद्धान्तप्रवणः परमार्थवित्।
स एव मध्यमः प्रोक्तः शुद्धसन्यासलक्षणः॥ २८६॥

१. वामदेवरहस्यं च प्रबन्धस्याऽस्य दासविद्याध्याये प्रतिपादितम्। यथा—

"इदं हि वामदेवाख्यं रहस्यं चाऽभिधीयते।
लोकाधिकारिपुरुषश्रीमद्भगवदाज्ञया॥
शुद्धाधिकारिभिः शुद्धदासेभ्यश्च सुखाप्तये।
यथाकालं यथादेशं यथाऽवस्थं च कर्म यत्॥
दिव्यं शुद्धफलं चैव संस्कृतं त्वधिकारिभिः।
तद्धि भवेद्वामदेवरहस्यं चेति कथ्यते॥
न तच्च शुद्धशास्त्रेषु दृश्यते संप्रकीर्तितम्।
केवलं स्वाऽऽप्तशुद्धार्यवचसा बुध्यते च तत्॥" इति।

एवंविधश्चैव भवेत्सन्यासी जितमन्मथः ।
तथाऽपि मध्यमात्तस्य चैवं भेदस्त्वियान्भवेत् ॥ २८७ ॥
श्रीयोगमठवासश्च तृतीयस्य विधीयते ।
न तथा मध्यमस्येति कल्पकारैर्महर्षिभिः ॥ २८८ ॥
सहपत्न्या हि धर्मार्थे स्वीयगोत्रैस्तथैव च ।
स्वस्यैव मन्दिरे श्लक्ष्णे योगस्थानाऽभिशोभिते ॥ २८९ ॥
निवृत्तबाह्यकर्मा च मध्यमो नियतात्मवान् ।
योगिलक्षणसंपन्नो निवसेच्च यथासुखम् ॥ २९० ॥
आहारनियमश्चैवं तृतीयस्य विधीयते ।
प्रातः श्रेष्ठः [१]क्षीरकल्पो मध्याह्ने च प्रशस्यते ॥ २९१ ॥

१. कालायसाख्ये च वैद्यशास्त्रे कल्पखण्डे च सप्तमे, क्षीरकल्पयोगप्रकारश्च सप्रयोजनं ह्यभिवर्णितो भवति । यथा वा—

"क्षीरकल्पं प्रवक्ष्यामि योगिनाममृतं परम् ।
यं साधयित्वा नासत्यौ वसिष्ठो भृगुनन्दनः ॥
व्यासश्च वामदेवश्च कपिलश्च शुकस्तथा ।
अन्ये सर्वेऽपि योगीन्द्राश्चाऽपश्यन्सिद्धिमात्मनः ॥
शुष्कं यद्राजखर्जूरीफलं शुद्धं रसोज्वलम् ।
तन्निर्बीजं विधायादौ वेदतोलमितं हरेत् ॥
छित्वा तच्चापि कणशो गवां क्षीरे प्रनिक्षिपेत् ।
चतुर्विंशत्तोलमिते तथा सत्त्वं सुनिर्मलम् ॥
शर्कराभं गुडूच्याश्च तोलार्धं हि प्रयोजयेत् ।
तथैव शर्कराखण्डं श्वेतं तोलत्रयोद्धृतम् ॥

१मधुकल्पस्तथा रात्रौ शुद्धसारफलैः कृतः।
२योगकल्पश्चेति वैद्यकालायलमहर्षिणा ॥ १९२ ॥

शुद्धदव्यां तु तत्क्षीरं निर्मण्डं तापयेद्बुधः।
अर्धाऽवशेषं क्षीरं हि सुखोष्णं च पिबेत्सुखी ॥
पात्रान्तरेण पेयं स्यात्तद्धि प्रातश्च योगिभिः।
क्षीरकल्पो ह्ययं प्रोक्तो दासानां सिद्धिमिच्छताम् ॥" इति।

१. तत्रैव मधुकल्पश्चाऽपि चैवं प्रतिपादितः—

"अथाहं संप्रवक्ष्यामि मधुकल्पं यथाविधि।
उदयी भगवान्वह्निः काशते यस्य सेवया ॥
वह्निमूलं बलं पुंसामिति सिद्धैर्निगद्यते।
यथाबलं शरीरं च शोभते कर्मसाधनम् ॥
तोलद्वयमितं यत्र माक्षिकं प्रवरं मधु।
तस्माद्विगुणितं चांबु सर्वमेकत्र योजयेत् ॥
आज्यदीपाग्निना किंचित्तापयित्वा यथोचितम्।
तत्र पात्रान्तरेणैव पिबेद्दासो यथासुखम् ॥
मध्याह्ने चेति कथितो मधुकल्पो बलप्रदः।
सिद्धैश्च सेवितोऽयं स्यादतः सुखकरो हि सः ॥" इति।

२. तत्रैव योगकल्पोऽपीत्थमभिवर्णितो भवति—

"ततः कल्पं प्रवक्ष्यामि योगाख्यं योगिनां हितम्।
सेवया यस्य योगीन्द्रा दृढबुद्धीन्द्रिया भुवि ॥

**एवमुक्ताश्च सर्वेऽपि स्वीकार्या मध्यमेव हि ।**
**सुसंपक्वेन शक्तेन चेति कालायसोऽचितम् ॥ २९३ ॥**

भवन्ति सुदृढाङ्गाश्च शोभमानाः सुवर्चसः ।
कल्पानामुत्तमोऽयं स्यादिति सिद्धैर्निगद्यते ॥
आयसे राजते वाऽपि शुद्धे पात्रे भिषग्वरः ।
मृदुत्वक्पीतवर्णं यदामघ्नं देवताप्रियम् ॥
सुलभ्यं सर्वकालेषु शुल्बसत्त्वं रुचिप्रदम् ।
हृदयाऽमृतरूपं च तथैव कदलीफलम् ॥
यथेष्टं हि समनीय मोचयित्वा त्वचं तथा ।
कणशः शस्त्रतश्छित्वा तस्मिन्पात्रे च निक्षिपेत् ॥
एकतोलमितेनैव साकमाज्येन भर्जयेत् ।
तथा प्राप्तं यथाकालं फलं रम्यं सुखावहम् ॥
सुखावहानि यानि स्युः फलानि मधुराणि च ।
तेषां स्वरूपमेवं हि विज्ञेयं कल्पकाङ्क्षिभिः ॥
द्राक्षारसालनारङ्गफलानि च तथैव हि ।
और्वारुकं च कापित्थं पानसं च फलं तथा ॥
बीजपूरफलं चेति कथ्यन्ते हि महर्षिभिः ।
एतेषां तु रसो ग्राह्यो विना ह्यौर्वारुकं तथा ॥
कापित्थं पानसं चैव विना सर्वं यथाविधि ।
पात्रे विनिक्षिपेच्चाऽथ निर्बीजं पानसं फलम् ॥

**स्निग्धकाषायवसनो मुण्डितो वा जटाधरः ।**
**योगसूत्रधरो दण्डी सोष्णीषो दीर्घकञ्चुकः ॥ २९४ ॥**

**अक्लिष्टवपुरात्मार्थी कृताहारः प्रसन्नधीः ।**
**कौपीनपादुकावांश्च सन्यासी दास उच्यते ॥ २९५ ॥**

**नित्यं त्रिषवणं स्नानं तृतीयस्य विधीयते ।**
**यथाकुलं यथाधर्मं विहितं ब्रह्मयोगिना ॥ २९६ ॥**

उर्वारुकं कपित्थं तु सबीजं हि विनिक्षिपेत् ।
तदेषां संहितं मानं यच्चेष्टं संप्रकल्प्यते ॥

तस्यांशेन षोडशेन दद्याच्च मधुशर्कराम् ।
दर्व्या चैव विशेषेण खजयेच्च पदे पदे ॥

सर्वमेतद्यथापाकं पाचयेच्च भिषग्वरः ।
पक्त्वा च विधिवत्सर्वं सुमुखे हव्यवाहने ॥

मालत्येलाफलं चूर्णं यथारोग्यं च निक्षिपेत् ।
तत्राऽथ च सुपक्वं च सुखोष्णं संप्रकल्पयेत् ॥

यथाकालं तदुक्तानां फलानां यावदेव हि ।
लभ्यते तावता चैव कल्पः कार्यो विधानतः ॥

यावता क्षुण्णिवृत्तिः स्यात्सुखं यावांश्च जीर्यति ।
तावदेव हि कर्तव्यो वरः कल्पोऽयमुच्यते ॥

श्रीमानयं योगकल्पो योगिनां पुष्टिवर्धनः ।
संसेव्यो योगिभिर्दासैरिति पूर्वैरिहोच्यते ॥''

अन्नमात्मानुरूपं च शुद्धं कामविवर्जितम् ।
यथेष्टं [1]संस्कृतं चैव रसवद्विधिचोदितम् ॥ २९७ ॥

सर्वेभ्यश्च कुलेभ्यस्तु स्वीकर्तुमुचितं भवेत् ।
सन्यासिनां तृतीयानामिति कालायसोदितम् ॥ २९८ ॥

यावच्च स्वजनेभ्यश्च भीतिः संसरणाऽनुगा ।
वर्णाश्रमपरेभ्यः स्यात्तावद्दासश्च मध्यमः ॥ २९९ ॥

शुद्धधर्मार्थविज्ञाता कुलाचारं समाचरेत् ।
ते संस्कारास्त्रयश्चैव गोत्राचाराः प्रकीर्तिताः ॥ ३०० ॥

यदा हि तादृशो बन्धः स्वयमेव हि भिद्यते ।
द्वंद्वमूलो दुराराध्यस्वभावो मध्यमस्य हि ॥ ३०१ ॥

तदा हि मध्यमो धीमान्तृतीयं पदमाश्रयेत् ।
तृतीयं च पदं तत्स्यात्सत्यधर्मोपलक्षितम् ॥ ३०२ ॥

स्वस्वरूपानुरूपं च स्वाधिकारस्य लक्षणम् ।
कर्म सर्वं हि नियतं सर्वेषां च विशिष्यते ॥ ३०३ ॥

विशेषनियमश्चाऽपि मध्यमानां विधीयते ।
पर्वणि ह्युपवासश्च तथा सङ्क्रमणे पुनः ॥ ३०४ ॥

शुद्धार्थविहिते चैव काले लोकसुखाऽऽवहे ।
सुसेव्यो मध्यमेनेति प्रोच्यते शुद्धयोगिभिः ॥ ३०५ ॥

यदि मध्यमदासस्य धर्मतः स्वस्त्रिया सह ।
मोहाद्भवेत्सङ्गमश्च तदा सोयं न पाल्यते ॥ ३०६ ॥

१. संस्कृतम्, मन्त्रपूतं यज्ञशिष्टमित्यर्थः.

एवं मोहाच्च जातस्य दोषस्य च विशेषतः ।
प्रायश्चित्तं हि विहितं भवेत्तैः शुद्धयोगिभिः ॥ ३०७ ॥

ब्राह्मोपनयनं तस्य पुनरेव विधीयते ।
केवलं कर्मणा चेति प्रायश्चित्तमिदं भवेत् ॥ ३०८ ॥

तेषां नियतकल्पानां दाससन्न्यासिनां पुनः ।
न चोपवासनियमो भवेदिति निगद्यते ॥ ३०९ ॥

न भिक्षाचरणं शस्तं कलौ सन्न्यासिनां भवेत् ।
आहूतोऽन्नं च भुञ्जीत दासः सन्न्यासलक्षणः ॥ ३१० ॥

अतो भिक्षाटनाद्यङ्गो निषिद्धः स्यात्कलौ युगे ।
तुरीयो ह्याश्रमश्चेति धर्मशास्त्रैश्च कथ्यते ॥ ३११ ॥

अतश्च शुद्धसन्न्यासो दासाश्रमपरः परः ।
भवेदिति च शुद्धार्यैरितिहासार्थवित्तमैः ॥ ३१२ ॥

कथ्यते शास्त्रदृष्ट्या तु तदेतत्सर्वसंमतम् ।
शुद्धसन्न्यासधर्माच्च परं तत्प्रतिपद्यते ॥ ३१३ ॥

यदि मन्मथविद्धश्च दासः सन्न्यासलक्षणः ।
दुष्टसंगाद्दुराचारान्नीचकार्यात्प्रमादतः ॥ ३१४ ॥

दुष्टस्त्रीसंश्रयाच्चाऽपि दुराहारनिषेवणात् ।
स पतेदुत्तमाच्चैव पदादिति निगद्यते ॥ ३१५ ॥

प्रायश्चित्तं न चैवाऽस्य विहितं परिदृश्यते ।
यतो दुष्कर्मणस्तस्मात्तस्य दग्धं वपुर्भवेत् ॥ ३१६ ॥

जन्मान्तरे पुनश्चाऽस्य पतितस्य च धर्मतः ।
तृतीयदाससंस्थानं भवेदिति निगद्यते ॥ ३१७ ॥

दुष्टसन्यासधर्मस्य नैव कर्म प्रशस्यते ।
स बहिष्कार्य एव स्याच्छुद्रैश्चैव महात्मभिः ॥ ३१८ ॥

मध्यमश्चैव यो दासस्तस्यैवं चाह्निकं भवेत् ।
कर्तव्यं च त्रिसन्ध्यासु तच्छृणुध्वं मुनीश्वराः ॥ ३१९ ॥

यदुक्तमाह्निकं पूर्वं दासस्य गृहमेधिनः ।
तदेव मध्यमस्याऽपि प्रायशो विहितं भवेत् ॥ ३२० ॥

परं त्वेवं विशेषश्च मध्यमस्य भवेदिह ।
संध्यामुपास्य विधिवज्जपस्थानं समाश्रितः ॥ ३२१ ॥

प्राङ्मुखः प्राञ्जलिश्चैव तिष्ठन्पद्मासने शुचिः ।
शान्तात्मा प्रणमेदेवं गुरून्सर्वान्यथाक्रमम् ॥ ३२२ ॥

ओं नमोऽस्मद्गुरुभ्यश्च परमेभ्यो नमो नमः ।
ओं ह्रीं हं खं गुरुभ्यश्च सर्वेभ्यश्च नमो नमः ॥ ३२३ ॥

इति सर्वान्गुरून्नत्वा ततो नारायणं नरम् ।
योगदेवीं च विधिवद्ध्यायेद्बीजैर्यथाक्रमम् ॥ ३२४ ॥

ओं नमो नारायणाय देवाय परमात्मने ।
श्रीं नं कं खं नमो भद्रवपुषे योगसाक्षिणे ॥ ३२५ ॥

नरदेवाय देवाय योगिनां पतये नमः ।
ओं ह्रीं श्रीं क्लीं महादेवीं पद्मासनसुसंस्थिताम् ॥ ३२६ ॥

योगदेवीं योगमूलां योगदण्डधरां शिवाम् ।
वन्देऽहं शिरसा योगंब्रह्मविद्याभिसंस्तुताम् ॥ ३२७ ॥
इति तृभ्यो नमस्कृत्य सप्तर्षीन्प्रणमेत्तथा ।
इत्थं [1]सप्तमहर्षिभ्यो मनसा प्रणमेद्बुधः ॥ ३२८ ॥
अथ स्वाचार्यदत्तां च गायत्रीं बीजसंयुताम् ।
मासं वा सार्धमासं वा योगविद्यां यथाविधि ॥ ३२९ ॥
सायं प्रातर्जपेन्नित्यं सहस्रैः षोडशैः क्रमात् ।
विद्याजपे तु संपूर्णे यथाकालं महर्षयः ॥ ३३० ॥
प्राणायामाभ्यासयोगं विधिपूर्वं समाचरेत् ।
यदि ह्यविधिपूर्वं च प्राणायामो निषेव्यते ॥ ३३१ ॥
सोऽयं हि प्राणिनां प्राणग्रन्थिं नाशयति ध्रुवम् ।
अतश्च विधिपूर्वं तं स्वार्यादेशेन साधयेत् ॥ ३३२ ॥
प्राणायामश्च योगस्य तथा तत्साधनस्य च ।
नाडीशुद्धेः स्ववीर्येण प्रथमं ह्यङ्गमुच्यते ॥ ३३३ ॥
अतश्च भगवान्साक्षाद्वासुदेवो जनार्दनः ।
प्राणायामादिसन्यासाऽवधि चैव हि कर्मणः ॥ ३३४ ॥
स्वरूपं योगगर्भं च प्राह पार्थाय धीमते ।
अतश्च कर्मयोगः स्यात्प्राणायामः शुभाऽऽवहः ॥ ३३५ ॥
पूरकाद्यङ्गयुक्तश्च प्राणायामः स चोदितः ।
पूर्वमेव यथातत्त्वं चास्माभिः सप्रयोजनम् ॥ ३३६ ॥

१. सप्तर्षयश्च, प्रबन्धस्यास्य प्रथमभागे २३-पत्रे प्रतिपादिताः

प्राणायामाद्भवेन्नाडीशुद्धिर्दैवांशदायिनी ।
यया सर्वाणि भूतानि स्वात्मीये विग्रहे पुनः ॥ ३३७ ॥

दासः पश्यति धर्मात्मा बुद्ध्या चैव विशुद्धया ।
तथा दर्शनसंभूतं नानात्वं स्वात्मनि स्थितम् ॥ ३३८ ॥

सम्यक्परीक्षया चैव विशोध्य च मुहुर्मुहुः ।
त्यजेद्दासो यया शुद्ध्या सा नाडीशुद्धिरिष्यते ॥ ३३९ ॥

अङ्गानि पूरकादीनि प्राणायामस्य यानि च ।
तेषामर्थस्तु बहुधा व्याख्यातोऽस्ति महर्षिभिः ॥ ३४० ॥

इत्थं हि तेषामर्थश्च शुद्धयोगिभिरुच्यते ।
योगशास्त्ररहस्याऽर्थाऽभिज्ञैश्च पूर्वसूरिभिः ॥ ३४१ ॥

पूरकाऽख्यं परं चाङ्गं प्राणायामस्य कथ्यते ।
एकस्मिंश्च विशुद्धे हि सत्त्वे देवे पराऽऽत्मनि ॥ ३४२ ॥

सर्वेषां चैव भावानां पूरणाच्च यथाक्रमम् ।
स्वतेजसा शरीरं च द्वितीयं पूरकं भवेत् ॥ ३४३ ॥

क्षेत्रज्ञस्य च तस्माद्धि वायुः स्यात्पूरकाभिधः ।
यदन्नमयं शरीरं तदेकस्थं न चाल्यते ॥ ३४४ ॥

शरीरं यत्प्राणमयं तच्च सर्वत्र गच्छति ।
ततश्च सर्वभावानां वायुना पूरणं वरम् ॥ ३४५ ॥

एवं यः पूरकाङ्गस्य वेत्ता सर्वप्रणाशकः ।
स योगी पूरकाख्यश्च राजयोगिषु गण्यते ॥ ३४६ ॥

चतुर्विधो हि भेदश्च भवेत्पूरकयोगिनाम् ।
स चैवमुपदिष्टः स्यात्पुरा भगवता पुनः ॥ ३४७ ॥

"यदा विनियतं चित्तमात्मन्येवाऽवतिष्ठते ।
निस्पृहः सर्वकामेभ्यो युक्त इत्युच्यते तदा" ॥ ३४८ ॥

इति तस्योपदेशस्य रहस्यार्थस्त्वयं भवेत् ।
परीक्षया हि भावानां सर्वेषां च महर्षयः ॥ ३४९ ॥

स्ववशीकरणं यच्च तत्स्यात्प्रथमलक्षणम् ।
वशीकृतानां भावानां योजनं स्वात्मविग्रहे ॥ ३५० ॥

यच्च तल्लक्षणं प्रोक्तं द्वितीयस्य महर्षयः ।
तत्सङ्कल्पपरित्यागस्तृतीयस्य हि लक्षणम् ॥ ३५१ ॥

स्वकीयदेवभावेन निरपेक्षस्थितिश्च या ।
सा वै तुरीयस्य भवेल्लक्षणं पूर्णकर्मणः ॥ ३५२ ॥

अङ्गं यत्कुंभकाख्यं च प्राणाऽऽयामस्य कीर्तितम् ।
तस्यैवं लक्षणं प्रोक्तं शुद्धधर्मपरायणैः ॥ ३५३ ॥

येन वै सर्वभावानां चैकरूपेण हि स्वयम् ।
विज्ञानं जायते शुद्धं कुंभकं तत्प्रकीर्तितम् ॥ ३५४ ॥

एवं कुंभकनिष्णातदासानां नियतात्मनाम् ।
यथापूर्वं हि चत्वारो भेदाः सन्ति महर्षयः ॥ ३५५ ॥

यथाक्रमं लक्षणं हि तेषां चैव निरूपितम् ।
तत्प्रणावामगीतायां पुरा भगवता पुनः ॥ ३५६ ॥

"यथा दीपो निवातस्थो नेङ्गते सोपमा स्मृता ।
योगिनो यतचित्तस्य युञ्जतो योगमात्मनः ॥ ३५७ ॥

यत्रोपरमते चित्तं निरुद्धं योगसेवया ।
यत्र चैवात्मनात्मानं पश्यन्नात्मनि तुष्यति ॥ ३५८ ॥

सुखमात्यन्तिकं यत्तद्बुद्धिग्राह्यमतीन्द्रियम् ।
वेत्ति यत्र न चैवाऽयं स्थितश्चलति तत्त्वतः ॥ ३५९ ॥

यं लब्ध्वा चाऽपरं लाभं मन्यते नाधिकं ततः ।
यस्मिन्स्थितो न दुःखेन गुरुणाऽपि विचाल्यते ॥ ३६० ॥

तं विद्याद्दुःखसंयोगवियोगं योगसंज्ञकम् ।
स निश्चयेन योक्तव्यो योगोऽनिर्विण्णचेतसा ॥" ३६१ ॥

इति चात्र रहस्यार्थश्चैवमेवाऽवगम्यते ।
अचंचलमनस्कत्वं चैकाग्र्यं विषयात्तये ॥ ३६२ ॥

अच्युतत्वं च शान्तत्वं चेति कुंभगयोगिनाम् ।
धर्माश्चैव हि चत्वारो भवन्तीति महर्षयः ॥ ३६३ ॥

रेचकाख्यं यदङ्गं च प्राणायामस्य कथ्यते ।
तस्य स्वरूपमेवं हि वर्ण्यते मुनिपुङ्गवाः ॥ ३६४ ॥

एकविज्ञानशास्त्रश्च नानात्वं त्यज्यते यतः ।
तद्विद्याद्रेचकं चाङ्गं सर्वकल्मषनाशकम् ॥ ३६५ ॥

"युञ्जन्नेवं सदात्मानं योगी विगतकल्मषः ।
सुखेन ब्रह्मसंस्पर्शमत्यन्तं सुखमश्नुते ॥" ३६६ ॥

इति श्रीवासुदेवेन रेचकस्य फलं च तत् ।
स्वात्मैकसमधिगम्यं व्याख्यातं स्यान्महर्षयः ॥ ३६७ ॥

तस्माद्यथाधिकारं हि मध्यमेन विपश्चिता ।
प्राणायामश्च सेव्यः स्याद्यथादेहबलं पुनः ॥ ३६८ ॥

इत्थं हि भगवान्पूर्वं नारदाय महात्मने ।
प्राणायामरहस्यार्थं चाह तं च ब्रवीम्यहम् ॥ ३६९ ॥

स्वीकारो ब्रह्मशक्तेश्च पूरकादुच्यते तथा ।
तस्याः सन्धारणा प्रोक्ता कुंभकेन महर्षयः ॥ ३७० ॥

असारमलनिर्मोको रेचकात्कथ्यते तथा ।
इति तस्मात्सुसेव्यः स्यात्प्राणायामश्च योगिभिः ॥ ३७१ ॥

एवमुक्तश्च योगाङ्गप्राणायामो महर्षयः ।
मासत्रयं सुसेव्यः स्यान्मासषट्कं प्रयत्नतः ॥ ३७२ ॥

संवत्सरं वा दासेन मध्यमेन यथाबलम् ।
सार्धवर्षत्रयं वाऽपि चेति शङ्करभाषितम् ॥ ३७३ ॥

परभावाऽभिसिद्धिश्च यावदात्मनि जायते ।
तावदेव हि कार्यः स्यात्प्राणायामश्च योगिभिः ॥ ३७४ ॥

घंटानादो यथाव्योम्नि लीयते क्रमशस्तथा ।
नानाभावपरिभ्रान्तमशान्तं चाऽस्थिरं मनः ॥ ३७५ ॥

यदा च परमे स्थाने तुरीये तु विलीयते ।
तदा समाधिर्भवति महानिर्वाणलक्षणः ॥ ३७६ ॥

यावद्भवेच्च दासानां निर्वाणोऽयं मुनीश्वराः ।
तावदेव हि कार्यः स्यात्प्राणायामो यथाबलम् ॥ ३७७ ॥

प्राणायामाश्च बहुधा कथ्यन्ते बीजभेदतः ।
ततो यथाधिकारं हि दासैः सेव्यः स चोच्यते ॥ ३७८ ॥

तत्प्राणायामनिष्ठानां मध्यमानां महर्षयः ।
प्रशस्तस्थानसंस्थानं फलं प्राप्यमिहोच्यते ॥ ३७९ ॥

तत्प्रशस्तं परं स्थानं तुरीयमिति निर्णयः ।
तत्रैव पुरुषः साक्षात्सेव्यते शुद्धयोगिभिः ॥ ३८० ॥

जपान्ते विहितो यश्च राजयोगो महर्षयः ।
स एव मध्यमानां हि प्राणायामात्परो भवेत् ॥ ३८१ ॥

या वै पुरुषसेवा च दासानां विहिता भवेत् ।
सा हि योगबलादेव जायते चेति कथ्यते ॥ ३८२ ॥

सबीजा चैव गायत्री प्राणायामे प्रशस्यते ।
योगबीजानि तान्येव पुरा भगवता पुनः ॥ ३८३ ॥

नारदेन विशेषेण व्याख्यातानि महर्षयः ।
तानि वः संप्रवक्ष्यामि योगदेवीप्रसादतः ॥ ३८४ ॥

1 माया रमा कामकला दक्षिणा तारिणी मही ।
शारदा भैरवी दुर्गा सुधा वह्निर्वियज्जलम् ॥ ३८५ ॥

---

१. इत्थं तानि योगबीजानि भवन्ति—ह्रीं-श्रीं-क्लीं-क्रीं-हूं-लं-ऐं-सैं-दुं-सौः-रं-ह्रं-वं-यं, इति ।

वायुश्चेति प्रसिद्धानि तानि योगपदानि च ।
नारायणादिभिः शुद्धैर्योगिभिश्च महात्मभिः ॥ ३८६ ॥

स्वशुद्धतपसा चैव संस्कृतानि विशेषतः ।
शोधितानि च दासानां भवेयुर्मनुसंख्यया ॥ ३८७ ॥

इत्थं हि योगगायत्री कथ्यते नारदादिभिः ।
बीजं पुरस्कृत्य पुनः सा स्याज्जप्या च योगिभिः ॥ ३८८ ॥

ओं ब्रह्मशक्तिर्देवी सर्वां विभूतिं प्रचोदयात् ।
ओं ज्ञानशक्तिर्देवी सर्वां विभूतिं प्रचोदयात् ॥ ३८९ ॥

ओमिच्छाशक्तिर्देवी सर्वां विभूतिं प्रचोदयात् ।
ओं क्रियाशक्तिर्देवी सर्वां विभूतिं प्रचोदयात् ॥ ३९० ॥

इति वेदस्वरूपा तु सा चकास्ति महर्षयः ।
आभ्यः सहस्रशश्चैव जायन्ते मातरः स्वयम् ॥ ३९१ ॥

प्राणायामेषु सर्वेषु जपेषु च यथाबलम् ।
अन्यास्वपि क्रियास्वेव स्वार्योक्तां हि समभ्यसेत् ॥ ३९२ ॥

याश्चोक्ता योगगायत्र्यो बीजान्यपि च यानि हि ।
तेषामेव तु सर्वेषां जपः परपदप्रदः ॥ ३९३ ॥

सालंबनो भवेच्चाऽयं जपयज्ञो महर्षयः ।
मनःसमाधिरेवाऽस्य प्रयोजनमिति श्रुतम् ॥ ३९४ ॥

जपन्तो मातरं नित्यं नियमेन यथाविधि ।
ये सन्ति तेषां सामीप्यं भगवांश्चण्डभानुना ॥ ३९५ ॥

वर्णितं चैवमेवं हि तच्छृणुध्वं मुनीश्वराः ।
तत्त्वं जपफलस्येह रहस्यं परिदृश्यते ॥ ३९६ ॥

ये वा शब्दहरा देवाः दिव्यदेहाः सुवर्चसः ।
तेषां सामीप्यमेव स्यात्तज्जपस्य फलं महत् ॥ ३९७ ॥

इति तद्देवसामीप्यं विज्ञेयं ह्यधिकारिभिः ।
जपेष्वपि च सर्वेषु प्रशस्तो मानसो जपः ॥ ३९८ ॥

निश्शब्दो वाचिकश्चैव यो भवेन्मध्यमश्च सः ।
सशब्दो वाचिको यश्च सोऽधमश्चेति कथ्यते ॥ ३९९ ॥

तस्माज्जपेषु सर्वेषु प्राणायामेषु वा पुनः ।
उच्चारणं च शब्दानां सूक्ष्ममेव वरं भवेत् ॥ ४०० ॥

उपस्थानादिकं सर्वं यथास्याद्गृहमेधिनः ।
तथैव मध्यमानां चाऽप्युच्यते शुद्धयोगिभिः ॥ ४०१ ॥

उपस्थानाऽवसाने च मध्यमः प्रयतात्मवान् ।
तिष्ठन्बद्धाञ्जलिश्चाऽऽशां ह्युत्तरामवलोकयन् ॥ ४०२ ॥

"जितं ते सर्वलोकेश पुराण पुरुषोत्तम ।
प्रजानां पतये तुभ्यं विष्णवे शङ्कराय ते ॥ ४०३ ॥

नरनारायण श्रीमन्नमस्ते द्विरदानन ।
नमस्ते भद्रवपुषे धर्मशास्त्र नमो नमः ॥ ४०४ ॥

विश्वकर्मन्नमस्तेऽस्तु विश्वात्मन्विश्वसंभव ।
अपवर्गस्थ भूतानां पञ्चानां परमास्थित ॥ ४०५ ॥

नमस्ते त्रिषु लोकेषु नमस्ते परतस्त्रिषु ।
नमस्ते दिक्षु सर्वासु त्वं हि सर्वपरायणम् ॥ ४०६ ॥

त्वं हि कर्ता हृषीकेशः संहर्ता चापराजितः ।
तेन पश्यामि ते दिव्यान्भावान्हि त्रिषु वर्त्मसु ॥ ४०७ ॥

यः सर्वः प्राणिनां देहे साक्षिभूतो ह्यवस्थितः ।
अक्षरः क्षरमाणानां तस्मै साक्ष्यात्मने नमः ॥ ४०८ ॥

नमोऽस्तु ते महादेव नमस्ते भक्तवत्सल ।
सुब्रह्मण्य नमस्तेऽस्तु प्रसीद परमेश्वर ॥ ४०९ ॥

तच्च पश्यामि तत्त्वेन यत्ते रूपं सनातनम् ।
व्यक्ताऽव्यक्तस्वरूपेण व्याप्तं सर्वं स्वतेजसा ॥ ४१० ॥

हिरण्मयेन पात्रेण सत्यस्याऽऽपिहितं मुखम् ।
तत्त्वं पूषन्नपावृणु सत्यधर्माय दृष्टये ॥ ४११ ॥

अव्यक्तं बुद्ध्यहङ्कारौ मनो बुद्धीन्द्रियाणि च ।
तन्मात्राणि विशेषाश्च तस्मै तत्त्वात्मने नमः ॥ ४१२ ॥

महतस्तमसः पारे पुरुषं ह्यतितेजसम् ।
यं ज्ञात्वा मृत्युमत्येति तस्मै ज्ञेयात्मने नमः ॥ ४१३ ॥

धर्मसंरक्षणार्थाय संभूताय महात्मने ।
महर्षिसिद्धरूपाय शुद्धाय गुरवे नमः" ॥ ४१४ ॥

इत्यादिस्यस्वरूपेण कथितं स्तोत्रमुत्तमम् ।
पठेन्नकथा हि दासश्च देवीस्तोत्रं ततः पठेत् ॥ ४१५ ॥

"ॐ नमस्ते महादेवि योगदेवि वरप्रदे ।
चतुर्भुजैः शंखचक्रयोगदण्डाक्षमालिकाः ॥ ४१६ ॥

संवहन्ति जगन्मातः सर्वाच्यें सर्वमङ्गले ।
पद्मासने सिद्धसेव्ये सिद्धमन्त्राऽधिदेवते ॥ ४१७ ॥

सर्वयन्त्रसमाराध्ये सर्वमन्त्राऽभिपूजिते ।
ब्रह्मण्ये ब्रह्मनिलये ब्रह्माऽनन्ये पराऽवरे ॥ ४१८ ॥

शुद्धधर्मसमाराध्ये योगविद्याऽधिदेवते ।
रमा शिवा शारदा त्वमसि तुभ्यं नमोऽस्तु मे ॥ ४१९ ॥

तेजस्व्यहं यशस्वी च यथा स्यां परमेश्वरि ।
वर्चस्वी त्वत्प्रसादाच्च तथात्वां शरणं भजे ॥ ४२० ॥

इति स्तवमिमं भक्त्या पठन्दासश्च मध्यमः ।
सर्वां विभूतिं प्राप्नोति योगदेवीप्रसादतः ॥ ४२१ ॥

ततः प्रोक्तं महायज्ञं यथाविधि समाचरेत् ।
अन्यत्सर्वं हि विहितं यच्च स्याद्गृहमेधिनः ॥ ४२२ ॥

अथ सन्यासिनां चैव दासानां नियतात्मनाम् ।
एवमेवाह्निकं प्रोक्तं तच्छृणुध्वं मुनीश्वराः ॥ ४२३ ॥

विना स्तोत्रं च कवचं यदुक्तं मध्यमस्य हि ।
तत्सर्वं प्रणवेनैव तृतीयस्य विधीयते ॥ ४२४ ॥

स्तोत्रं च कवचं चैव यदुक्तं मध्यमस्य हि ।
तदेव ह्यनुसन्धेयं भवेत्संन्यासिभिः परैः ॥ ४२५ ॥

यश्च प्रोक्तो महायज्ञः पूर्वमेव यथाविधि ।
स च सन्यासिभिः सेव्यो यथेच्छं चेति कथ्यते ॥ ४२६

स सेव्यो नियमेनेति नारदादिभिरुच्यते ।
वामदेवरहस्यं हि सर्वत्र च नियामकम् ॥ ४२७ ॥

परं त्वस्य तृतीयस्य विशेषनियमोऽपि च ।
विहितो दृश्यते चैवं रहस्यं सर्वकर्मसु ॥ ४२८ ॥

१द्वंद्वबीजाक्षरे मायां तस्याः शक्तिद्वयं तथा ।
सन्यासी मन्त्रदेहे तु पश्येच्चैव यथाक्रमम् ॥ ४२९ ॥

आद्याक्षरशिरस्कं च पल्लवान्तं मनोर्वपुः ।
मन्त्रोऽयमेव सर्वेषु तृतीयस्य च कर्मसु ॥ ४३० ॥

प्रधानाङ्गश्चेति पूर्वैर्नारदादिभिरुच्यते ।
तस्माद्दासश्च सन्यासी मनुनाऽनेन तत्त्ववित् ॥ ४३१ ॥

आत्मीयानि प्राकृतानि शुद्धानि च विशेषतः ।
सर्वाण्यपि च कर्माणि विधिवच्च समाचरेत् ॥ ४३२ ॥

१. द्वंद्वबीजाक्षरवाच्यं च, प्रबन्धस्यास्य प्रथमभागे सप्तत्रिंशदधिकद्विशतश्लोकाभिवर्णितं तत्तदार्यैश्च तत्तद्दासेभ्यो यथास्वरूपं समुपदिष्टं चैकाक्षरबीजम्, श्वेतकेतुविद्याबीजं च तादृशं भवति । तथा च प्रकृते, प्रथमं प्रणवः, ततश्चैकाक्षरबीजम्, ततः श्वेतकेतुबीजम्, ततो ह्रीं बीजम्, ततः श्रीं क्लीं चेति बीजम्, ततो नमः पदं चेति मन्त्रस्वरूपं विज्ञेयम् ॥

किं च सर्वं हि विहितं तृतीयस्य महर्षयः ।
यथाकालं यथादेशं यथावस्थं भवेदिति ॥ ४३३ ॥

सिद्धान्तः शुद्धशास्त्रेषु महितः परिदृश्यते ।
वामदेवरहस्यं चाऽप्यत्र प्रोक्तं नियामकम् ॥ ४३४ ॥

महायज्ञनिवृत्तानां दाससन्यासिनां पुनः ।
तीर्थान्तं तर्पणं ब्राह्मं विहितं चेति निर्णयः ॥ ४३५ ॥

इत्थं चात्र हि विज्ञेयं विशुद्धं ब्रह्मतर्पणम् ।
परनिर्वाणगर्भं च परसामीप्यदं शिवम् ॥ ४३६ ॥

" पुरुषायाऽऽदिदेवाय शुद्धाऽक्षरनिवासिने ।
सच्चिदानन्दवपुषे पञ्चमायाऽखिलात्मने ॥ ४३७ ॥

आनन्दशुक्रबिंबाय परमाय महौजसे ।
विज्ञानशुक्रबिंबाय परमात्मस्वरूपिणे ॥ ४३८ ॥

मानसशुक्रबिंबाय शुद्धकल्याणरूपिणे ।
आत्मने सूत्रवपुषे सर्वैश्वर्यप्रदायिने ॥ ४३९ ॥

प्राणशुक्रबिंबिताय जीवाय खण्डितात्मने ।
स्वसङ्कल्पनायकाय स्वामिने प्राणनाऽऽत्मने ॥ ४४० ॥

तदन्नशुक्रबिंबाय बलभद्राय मूर्तये ।
हृषीकेशाय बुद्धाय सर्वब्रह्माण्डधारिणे ॥ ४४१ ॥

महाशिवाय सांबाय पञ्चाक्षरपरात्मने ।
ब्राह्मीशक्त्युपहिताय ब्रह्मणे त्र्यक्षरात्मने ॥ ४४२ ॥

महालक्ष्मीसनाथाय महते विष्णवे दिवे ।
अष्टाक्षरपदाच्याय धर्मगोप्त्रेऽखिलात्मने ॥ ४४३ ॥

नारायणाय देवाय महत्तत्वात्ममूर्तये ।
लोकनाथाय शुद्धाय मुनये सर्वसाक्षिणे" ॥ ४४४ ॥

इति चोक्तेषु सर्वेषु चतुर्थ्यन्तेषु मन्त्रवित् ।
प्रत्येकं तर्पयामीति पदमन्ते प्रकल्प्य हि ॥ ४४५ ॥

आदौ १सन्यासबीजानि प्रकल्प्य च यथाविधि ।
ब्राह्मं च तर्पणं कुर्यात्सन्यासी विजितेन्द्रियः ॥ ४४६ ॥

किं चैवं हि तृतीयस्य विशेषनियमोऽपि च ।
विहितो दृश्यते तं च शृणुध्वं मुनिपुङ्गवाः ॥ ४४७ ॥

अमृतीकरणं नामा संस्कारः शुद्धिलक्षणः ।
सन्यासिनां हि विहितः परस्थानाऽप्तये पुनः ॥ ४४८ ॥

प्रथमानां द्वितीयानां दासानामपि योगिनः ।
संस्कारो ह्यमृताख्यश्च जायते पूर्वपुण्यतः ॥ ४४९ ॥

ये भवन्त्यमृताः शुद्धा दासास्ते ब्रह्मकर्मणा ।
अभयं सर्वभूतेभ्यो दातुं शक्ता भवन्ति हि ॥ ४५० ॥

१. सन्यासबीजानि च, प्रथममेकाक्षरम्, द्वितीयं श्वेतकेतुर्बीजम्, तृतीयं ह्रीं बीजम्, तुरीयं श्रीं बीजम्, पञ्चमं क्लीं बीजम्, इति क्रमेण निर्दिष्टानि भवन्तीति विज्ञेयम् ॥

धन्यानामेव दासानामाप्तानां सत्यगामिनाम् ।
समानां सर्वभूतेषु हार्दैश्वरपरात्मनाम् ॥ ४५१ ॥

अदुष्टवचसां चैव स्थितिं शुद्धामभीप्सताम् ।
संस्कारोऽयं भवेच्चेति पुरा नारदभाषितम् ॥ ४५२ ॥

अमृतो यश्च संस्कारस्तस्यार्थस्त्वित्थमुच्यते ।
शुद्धानां चैव वृद्धानां जगदभ्युदयार्थिनाम् ॥ ४५३ ॥

स्वार्थगोष्ठी समावेशयोग्यता या च जायते ।
तस्याः स्थैर्यं येन भवेत्सोऽमृतश्चेति गीयते ॥ ४५४ ॥

आत्मशक्तेः स्वरूपं हि प्रथमं चाभयं भवेत् ।
यत्तत्स्थैर्यमिति श्रेयं शुद्धस्वातन्त्र्यलक्षणम् ॥ ४५५ ॥

वामदेवरहस्यं तत्संस्कारेऽस्मिन्विशिष्यते ।
अमृतानां भवेद्येन संबन्धश्च महात्मभिः ॥ ४५६ ॥

दीक्षिताश्चाऽमृतैर्ये वा शुद्धैर्महात्मभिः ।
दासाः सन्यासिनः सन्ति तेषां वै ब्रह्मतर्पणम् ॥ ४५७ ॥

इत्थमाह कुमारश्च भगवानमृतेश्वरः ।
स एवात्र हि सर्वेषां लोके महसि तिष्ठति ॥ ४५८ ॥

स चैव दीक्षां कुरुते ह्यात्मविग्रहलक्षणाम् ।
गुरुत्वं सर्वलोकानां चाऽयमेवाऽधितिष्ठति ॥ ४५९ ॥

गुशब्दस्त्वन्धकारः स्याद्रुशब्दस्तन्निरोधकः ।
अन्धकारनिरोधित्वाद्गुरुरित्यभिधीयते ॥ ४६० ॥

अन्धकारे निवृत्ते तु दासाः पश्यन्ति तं प्रभुम् ।
परमं पुरुषं दिव्यं यस्माद्योगोऽभिजायते ॥ ४६१ ॥

इत्थं हि योगगायत्री भवेदमृतगामिनाम् ।
तयैव तर्पणं ब्राह्मं कार्यमित्येव निर्णयः ॥ ४६२ ॥

प्रणवः प्रथमश्चात्र पुरुषार्थः सनातनः ।
आनन्दकोशशुक्रं च सर्वैश्वर्यत्वसिद्धये ॥ ४६३ ॥

अधिष्ठितश्च भगवान्परमः पुरुषोत्तमः ।
योगिनामनुग्रहाय यस्य वाच्यो भवेत्ततः ॥ ४६४ ॥

मायां ततोऽमृतं बीजं द्वंद्वबीजं ततो भवेत् ।
ततो रमां च कामाक्षीं शारदां च ततः परम् ॥ ४६५ ॥

नमः पदं प्रयुञ्जीत योगदेवीपदं ततः ।
सर्वां दिव्यां विभूतिं मे प्रचोदयादिति [1]स्वयम् ॥ ४६६ ॥

संपूर्णां चैव गायत्रीं दासो विद्याद्यथाविधि ।
गायत्र्यैव तया दासः कुर्यात्तद्ब्रह्मतर्पणम् ॥ ४६७ ॥

ब्राह्मं हि तर्पणं ये तु कुर्वन्त्यमृतगामिनः ।
न तेषां हवनं मुख्यं नैवाऽन्यत्प्राकृतं तपः ॥ ४६८ ॥

१. योगगायत्रीस्वरूपं च—ओं ह्रीं सौः— —क्लीं ऐं नमो योगदेवी सर्वां दिव्यां विभूतिं मे प्रचोदयात् , इति भवति । यत्रैवम्— —इत्यङ्कितप्रदेशे च क्रमशः एकाक्षरं श्वेतकेतुबीजं च निवेश्यम् ॥

केवलं भावनैव स्यात्तेषां वै मुख्यलक्षणम् ।
शरणं धाम दिव्यं च परमं पदमच्युतम् ॥ ४६९ ॥

सनातनं ब्रह्म योगं शुद्धं स्थानं शुभाश्रयम् ।
सच्चिदानन्दरूपं च शान्ति संस्थितिमात्मनः ॥ ४७० ॥

भजन्ति शुद्धा दासाश्च भावनायाः प्रभावतः ।
सन्यासत्यागपूतास्तु शुद्धाः स्युरिति निर्णयः ॥ ४७१ ॥

एवं श्वेतकेतुविद्यादीक्षितानां यथाविधि ।
आह्निकं च मया सर्वं व्याख्यातं स्यान्महर्षयः ॥ ४७२ ॥

अथ वक्ष्ये दीक्षितानां धर्मकेतोश्च विद्यया ।
आह्निकं यच्च तत्सर्वं यथाविधि निबोधत ॥ ४७३ ॥

या दीक्षा धर्मकेतोश्च शुद्धाचार्यानुशिक्षिता ।
सा प्रशस्ता भवेत्स्त्रीणामिति शङ्करभाषितम् ॥ ४७४ ॥

स्त्रियो भवन्ति धर्माणां केतवश्चेति कथ्यते ।
यतो धर्माः प्रकाशन्ते स्त्रीभिरेव सनातनाः ॥ ४७५ ॥

पुरुषो धर्मरूपः स्यात्स्त्रिया स च हि शोभते ।
पुरुषस्य हि या शक्तिर्व्यवसायस्य साधनम् ॥ ४७६ ॥

स्त्रीरूपिणी सैव शक्तिर्बहिश्चरति पूरुषात् ।
शोभन्ते पुरुषाः स्त्रीभिस्तथा ब्रह्मर्षयोऽपि च ॥ ४७७ ॥

कन्यिकादानसमये सहधर्मचरी तव ।
इत्याह जनकः श्रीमान्रामायाऽऽपन्निवारिणे ॥ ४७८ ॥

सर्वे धर्मास्त्रीभिरेव प्रचरन्ति विशेषतः ।
धर्मो ह्यभ्युदयात्मा स्यादिति वेदैर्निगद्यते ॥ ४७९ ॥

तस्मान्नाम्ना धर्मकेतुदीक्षा सा सर्वमङ्गला ।
स्त्रीणामेवेति सिद्धान्तः पूर्वाचार्यानुशिक्षितः ॥ ४८० ॥

स्त्रीणां दासाश्रमाणां च त्रैविध्यं स्यात्स्वभावतः ।
तत्र कन्येति मातेति पत्नीति गदितं भवेत् ॥ ४८१ ॥

विद्यावती विशुद्धाङ्गी शुद्धाचारगुणान्विता ।
या च नोद्वाहिता भर्त्रा सा कन्येति निगद्यते ॥ ४८२ ॥

या स्रष्टी सुप्रजानां च सकामा नाग्रिका प्रिया ।
शुद्धशीलसमाचारा सा मातेत्यभिधीयते ॥ ४८३ ॥

या निवृत्तरजस्का च ऋणत्रयपरावृता ।
सभर्तृका शुद्धगुणा सा पत्नीत्यभिधीयते ॥ ४८४ ॥

एवं विभक्तधर्माणां स्त्रीणां चैव यथाक्रमम् ।
दासश्रमाणां प्रत्येकं चाह्निकं स्यान्मुनीश्वराः ॥ ४८५ ॥

ब्राह्मकाले समुत्थाय या कन्या सा यथासुखम् ।
विशुद्धाङ्गी शुद्धवस्त्रा प्रणमेत्संयताञ्जलिः ॥ ४८६ ॥

उत्तराऽभिमुखं चात्र मन्त्रोऽयं हि प्रयुज्यते ।
मन्त्रस्याऽस्य स्वरूपं च ह्येवमेवाऽवगम्यते ॥ ४८७ ॥

प्रणवं पूर्वमुच्चार्य मायां चाऽथ श्रीयं ततः ।
कामकलां च विधिवत्ततः श्लोकद्वयं पठेत् ॥ ४८८ ॥

ब्रह्मदेवि महादेवि योगदेवि महेश्वरि ।
नमस्ते देवि कल्याणि कमले शारदेऽम्बिके ॥ ४८९ ॥

अस्मिन्दिने भवद्यश्च व्यवसायः परो मम ।
स भूयात्सुमुखो देवि त्वत्प्रसादाद्विशेषतः ॥ ४९० ॥

इति श्लोकद्वयं चात्र विज्ञेयं दासकन्यया ।
एवं मन्त्रं समुच्चार्य प्रणामांश्चतुरश्चरेत् ॥ ४९१ ॥

अथ मङ्गळगायत्रीं जपेद्भक्त्या यथाविधि ।
अथ शुद्धोदकं पात्रं शुद्धद्रव्याऽभिशोभितम् ॥ ४९२ ॥

निधाय पुरतश्चोपविशेत्स्थाने तु निर्मले ।
ततश्च निश्चलं कृत्वा मानसं शुद्धविद्यया ॥ ४९३ ॥

सध्यानं धर्मकेतोश्च विद्यां सर्वकुलोज्वलाम् ।
अष्टोत्तरशतैश्चैव विद्रुमैः कृतया च हि ॥ ४९४ ॥

मालया च यथान्यायं जपयज्ञं समाचरेत् ।
धर्मकेतोश्च विद्याया ह्येवं ध्यानमिहोच्यते ॥ ४९५ ॥

शुद्धस्फटिकसंकाशं ब्रह्माक्षरसमुद्भवम् ।
आत्मानं शक्तिसंयुक्तं नानारूपमुपास्महे ॥ ४९६ ॥

इति ध्यात्वा यथाभावं गायत्रीं मनसा जपेत् ।
धर्मकेतोश्च विद्यानां स्वरूपं पञ्चधा भवेत् ॥ ४९७ ॥

स्वार्थोक्तां तत्र गृह्णीयाद्यथाकामं महर्षयः ।
जपान्ते चोपस्थानं कर्तव्यं चैवमेव हि ॥ ४९८ ॥

उत्थाय प्राङ्मुखी कन्या बद्धाञ्जलिपुटा स्वयम् ।
पञ्चसिद्धानदृश्यांश्च प्रणमेच्छुद्धचेतसा ॥ ४९९ ॥

कुमारं दक्षिणामूर्तिं देवापि चण्डभानुकम् ।
आकाशभैरवं चैव प्रणमामि यथाबलम् ॥ ५०० ॥

इति मन्त्रेण कन्याऽथ ध्यायन्ती सर्वमङ्गलम् ।
संस्तुयाद्योगदेवीं तां चैवं मङ्गलया गिरा ॥ ५०१ ॥

"मङ्गलं लोकनाथाय देव्यस्तु कृपया तव ।
त्वमेव ब्रह्मणो रूपं त्वदधीनमिदं जगत् ॥ ५०२ ॥

मङ्गलं सर्वलोकेभ्यो भूयात्सिद्धगणेश्वरि ।
त्वत्प्रसादाच्च सर्वेऽपि लोकाः सन्ति निरामयाः ॥ ५०३ ॥

मङ्गलं नोऽस्तु कल्याणि सर्वैश्वर्यप्रदेऽमले ।
त्वत्प्रसादाद्वयं सर्वे भवेमः सविभूतिकाः ॥ ५०४ ॥

कार्यं कर्म करोम्यद्य तत्र स्याद्यदि कश्मलम् ।
न्यूनातिरेकं यत्किञ्चित्तत्क्षमस्व महेश्वरि ॥ ५०५ ॥"

इति माङ्गलिकं सूक्तं ह्युपस्थाने सति स्वयम् ।
जप्त्वाऽथ प्रणमेत्कन्या प्राङ्मुखं च यथाविधि ॥ ५०६ ॥

कन्यानां नैव सङ्कल्पो मन्त्रपूर्वः प्रयुज्यते ।
प्राणायामश्च यज्ञश्च यज्ञान्यत्तर्पणादिकम् ॥ ५०७ ॥

नैव कार्यमिति प्राहुर्यतो कन्या हि दुर्बला ।
विद्याभ्यासादनीशत्वान्मुग्धत्वाच्च विशेषतः ॥ ५०८ ॥

सायं प्रातश्च कन्यानां जपमात्रं विशिष्यते।
जपान्ते कन्यया कार्यमर्घ्यदानं यथाविधि ॥ ५०९ ॥
तदित्थमर्घ्यदानं स्यात्कथितं मुनिपुङ्गवाः।
येन संसारनाथश्च प्रीणाति परमेश्वरः ॥ ५१० ॥
हस्ताभ्यां तीर्थमुद्धृत्य दद्यादर्घ्यं समन्त्रकम्।
अयं स्यादर्घ्यदानस्य मन्त्रः प्रोक्तो महाफलः ॥ ५११ ॥
"ओं नमः परमे देवि दिव्यविज्ञानविग्रहे।
गृहाणाऽर्घ्यं मया दत्तं श्रीं सौः कं वं पराऽमृतम्" ॥५१२॥
इति चाथ यथाशक्ति प्रतिमां पूजयेद्वराम्।
महालक्ष्म्याश्च दुर्गायास्तथाऽन्यासां यथाप्रियम् ॥ ५१३ ॥
साक्षतैः कुसुमैर्धूपदीपाद्यैश्च यथासुखम्।
पूजोपयोगी मन्त्रश्च प्रोक्तश्चैवं महर्षिभिः ॥ ५१४ ॥
प्रणवं पूर्वमुच्चार्य रमां च तदनन्तरम्।
मायां ततः कामकलां देव्यै चेति पदं ततः ॥ ५१५ ॥
नमः पदं ततो विद्यादिति [1]मन्त्रवपुर्भवेत्।
अनेनैव हि मन्त्रेण पूजां सर्वां समाचरेत् ॥ ५१६ ॥
अथैवं पुण्यवृक्षाणां यथाशक्ति प्रदक्षिणम्।
कुर्वीत विधिवत्कन्या समन्त्रं मुनिपुङ्गवाः ॥ ५१७ ॥
अश्वत्थो बिल्ववृक्षश्च पुष्पवृक्षास्तथाऽपरे।
फलवृक्षाश्च ये सन्ति ते स्युः पुण्याश्च शाखिनः ॥ ५१८ ॥

---

१. "ओं श्रीं ह्रीं क्लीं देव्यै नमः" इति मन्त्रस्वरूपमुच्यते।

या मुकुन्दप्रिया देवी तुळसी भूतिदायिनी ।
तस्याः प्रदक्षिणं वाऽपि चरेत्कन्या यथाविधि ॥ ५१९ ॥

इत्थं प्रदक्षिणार्थः स्यान्मन्त्रश्च मुनिपुङ्गवाः ।
येन संस्तूयते देव्यो भगवांश्च प्रजापतिः ॥ ५२० ॥

"ओं नमो ब्रह्मरूपाय प्रजानां पतये नमः ।
सर्वसंसारबीजाय स्थूलसंसाररूपिणे ॥ ५२१ ॥

निमित्ताय प्रकृतये सर्वमङ्गलदायिने ।
शुद्धशान्तस्वरूपाय शुद्धतेजस्स्वरूपिणे ॥ ५२२ ॥

तुष्टिदाय पुष्टिदाय दिव्यामृतमहौजसे ।
वनस्पतिस्वरूपाय पुरुषाय नमो नमः" ॥ ५२३ ॥

इति मन्त्रेण कन्या हि तीर्थहस्ता सुमानसा ।
प्रदक्षिणत्रयं कुर्यात्काले चैव यथाविधि ॥ ५२४ ॥

ततो विद्याध्ययनादि कर्म सर्वं समाचरेत् ।
इति कन्याह्निकं प्रोक्तं यथाशास्त्रं महर्षयः ॥ ५२५ ॥

एवमेवाऽऽह भगवान्नारदो धर्मवत्सलः ।
श्रवणादस्य युष्माकं श्रेयश्च सुमहद्भवेत् ॥ ५२६ ॥

अथाह्निकं च मातॄणामेवं निगदितं भवेत् ।
तदद्य संप्रवक्ष्यामि यथाविधि महर्षयः ॥ ५२७ ॥

आह्निकं यत्तु वै प्रोक्तं कन्यायाः प्रथमं भवेत् ।
तदेव शुद्धमातॄणां विहितं च यथाविधि ॥ ५२८ ॥

या च माता हि पूर्वस्यां रात्र्यां भर्त्रा सह स्वयम् ।
यथा धर्ममवाप्नोति सङ्गमं रतिकामिनी ॥ ५२९ ॥

तयाऽपरस्मिन्दिवसे कार्यमेवं यथाविधि ।
निगद्यते नारदाद्यैः शुद्धधर्मार्थवित्तमैः ॥ ५३० ॥

ब्राह्मे मुहूर्ते चोत्थाय माता सन्तुष्टमानसा ।
स्नायाच्च विधिवत्साऽपि ततो वस्त्रादिभूषिता ॥ ५३१ ॥

रम्यचन्दनलेपाढ्या रम्यपुष्पशिरोरुहा ।
वदन्ती मङ्गलं वाचा सस्तोत्रं प्रणमेत्पतिम् ॥ ५३२ ॥

शुद्धं धर्मरहस्यार्थविस्तारं शुभलक्षणम् ।
धर्मवेषोज्वलं चैव माता प्रीतिपुरस्सरम् ॥ ५३३ ॥

इत्थं तदनुसन्धेयं पुण्यस्तोत्रं च मातृभिः ।
पुण्यशीलान्विताभिश्च तच्छृणुध्वं महर्षयः ॥ ५३४ ॥

" मङ्गलं पुण्यशीलाय तेऽस्मन्नाथाय मङ्गलम् ।
दद्यात्कल्पतरुर्देवो भगवान्कमलापतिः " ॥ ५३५ ॥

इति चाऽथ यथोक्तं तदाह्निकं च यथाविधि ।
कुर्यात्पातिव्रता माता दासलक्षणलक्षिता ॥ ५३६ ॥

या तु पुत्रार्थिनी माता सह भर्त्रा हि सङ्गमम् ।
स्वधर्मगुप्तये चाऽपि प्राप्नोति च समाहिता ॥ ५३७ ॥

तयाऽपि कार्यमेव स्याद्भर्तुः स्तोत्रं यथाविधि ।
ततस्तया च कर्तव्यो जपोऽयं गर्भरक्षकः ॥ ५३८ ॥

भर्तुस्तोत्रं सप्रणामं कृत्वा माता मनस्विनी ।
पञ्चदेवात्मकं मन्त्रं जपेत्पुत्रप्रदं शिवम् ॥ ५३९ ॥

" ॐ नमो देवदेवाय लं वं रं यं महौजसे ।
हं क्लीं ग्लौं ह्रीं रक्ष रक्ष गर्भं मे लोकनायक ॥ " ॥ ५४० ॥

इति सत्पुत्रदो मन्त्रो जप्यः स्याच्छतसंख्यया ।
एवं जप्त्वा ततः कुर्यादाह्निकं नियतं स्वकम् ॥ ५४१ ॥

कन्यानां चैव मातॄणां नित्यमाह्निककर्म च ।
समानं यद्यपि प्रोक्तं तथाप्येवं महर्षयः ॥ ५४२ ॥

अर्घ्यदाने विशेषश्च मन्त्रः प्रोक्तोऽस्ति सूरिभिः ।
इत्थं स्यादर्घ्यदानस्य मन्त्रः स्याद्धि महर्षयः ॥ ५४३ ॥

" ॐ नमः सर्वकल्याणनिलये परमेश्वरि ।
भद्रकालि नमस्तुभ्यं महाकालि नमोऽस्तु ते ॥ ५४४ ॥

क्लीं बीजपीठनिलये ह्रीं बीजपुरवासिनि ।
हूं बीजशक्ते सौं बीजे सुधाब्धितनये रमे ॥ ५४५ ॥

ऐं बीजे ज्ञानशक्ते श्रीं बीजशक्ते नमोऽस्तु ते ।
सौभाग्यं सर्वमाहात्म्यं प्राजापत्यं सुवर्चसम् ॥ ५४६ ॥

श्रीं बीजराज्यमहिषि क्लीं बीजोत्फुल्लमानसे ।
देहि मे सुप्रसन्ना त्वं दत्तमर्घ्यं गृहाण मे" ॥ ५४७ ॥

इत्येवं सर्वमातॄणां नियमश्चापि दृश्यते ।
आह्निकं नैव कार्यं स्यादृतुकाले च मातृभिः ॥ ५४८ ॥

ऋतोस्तुरीये दिवसे सम्यक्स्नात्वा यथाविधि ।
परिधाय शुभं वस्त्रं रम्यगन्धाऽनुलेपना ॥ ५४९ ॥

भूषिताऽऽभरणैः पुष्पैस्तिलकं कुङ्कुमं तथा ।
संवहन्ती मनोज्ञाङ्गी माता संशुद्धमानसा ॥ ५५० ॥

महालक्ष्म्याश्च समये तुरीये चोत्तराऽऽनना ।
बद्धांजलिपुटा चैवं माङ्गल्यं कवचं पठेत् ॥ ५५१ ॥

"ओं ह्रीं क्लीं श्रीं महादेवी वीरसिंहासनास्थिता ।
आत्मानं सर्वदा पातु सर्वभावसमन्वितम् ॥ ५५२ ॥

क्लीं देवी हृदयं पातु सर्वसङ्कल्पलक्षणम् ।
ऐं देवी मे धियं पातु सर्वविद्याधिदेवता ॥ ५५३ ॥

श्रीं देवी पातु मे सर्वां विभूतिं शुभलक्षणा ।
क्रीं देवी पातु मे सर्वं कर्म सात्त्विकलक्षणम् ॥ ५५४ ॥

सौं देवी पातु मे प्राणानमृतोद्भिन्नविग्रहा ।
ह्रीं देवी पातु मे शक्तिमात्मीयां सर्वकामदाम्" ॥ ५५५ ॥

इत्येतत्कवचं दिव्यं पुरा देव्या समीरितम् ।
पठन्तीनां च मातृणामृतुस्नानदिने पुनः ॥ ५५६ ॥

ऋतुदोषश्च यश्चाऽस्ति सर्वसौभाग्यनाशकः ।
स नश्यति महादेवीप्रसादाच्च महर्षयः ॥ ५५७ ॥

तदेतत्कवचं सर्वमङ्गलायतनं महत् ।
अनुसन्धाय माता च प्रणमेत्परदेवताम् ॥ ५५८ ॥

अथसर्वं समुचितं यथोक्तं चाह्निकं चरेत् ।
माता धर्मरहस्यज्ञा धर्मकामार्थतत्परा ॥ ५५९ ॥

किं चैवं नियमश्चायं मातॄणामवगम्यते ।
विशेषलक्षणश्चैवं स चैवमवधार्यताम् ॥ ५६० ॥

ऋतुस्नाता च या माता विशुद्धा धर्मगामिनी ।
भर्तारं पुण्यकर्माणं ह्यभिगच्छेन्मुदा च सा ॥ ५६१ ॥

इत्ययं नियमश्चाऽपि परमो धर्म उच्यते ।
मातॄणां पुत्रकामानामिति नारदभाषितम् ॥ ५६२ ॥

इत्येवं सर्वमातॄणामाह्निकं गदितं मया ।
अथाऽऽह्निकं च पत्नीनामेवं वक्ष्ये महर्षयः ॥ ५६३ ॥

विद्यया च यया भर्ता दीक्षितश्च भवेत्तया ।
विद्ययैव हि पत्नीनां दीक्षा कार्या भवेदिति ॥ ५६४ ॥

प्राह नन्दी च भगवान्नारदस्तन्निषेधति ।
इत्थमत्र हि विज्ञेयं तत्त्वं च मुनिपुङ्गवाः ॥ ५६५ ॥

भर्तुर्यदाह्निकं प्रोक्तं पत्नीनां च विशेषतः ।
तदाह्निकं च सर्वं हि धर्मकेतोश्च (?)या ॥ ५६६ ॥

कुर्यात्पत्नी यथाशास्त्रं दृढाङ्गी संशितव्रता ।
अशक्ता या च पत्नी स्यात्सा च मातुः समीरितम् ॥५६७॥

आह्निकं चैव सर्वं हि विधिवच्च समाचरेत् ।
कन्याह्निकं च वा कुर्याद्भावनायाः प्रभावतः ॥ ५६८ ॥

स्वस्वभावविरुद्धं च यद्भवेदाह्निकं पुनः ।
कन्यायाश्चैव मातुश्च तच्च सर्वं महर्षयः ॥ ५६९ ॥

पत्नी परित्यजेच्चेति पुरा शङ्करभाषितम् ।
पत्नीनामर्घ्यदानार्थो मन्त्रश्चैवं विधीयते ॥ ५७० ॥

" ओं नमः श्रीं पद्महस्ते पद्मनाभप्रिये रमे ।
ओं नमो ह्रीं महादेवि कमले कमलासने ॥ ५७१ ॥

ओं नमः क्लीं परे रम्ये सावित्रि परमेश्वरि ।
गृहाणार्घ्यं मया दत्तं प्रीणातु परमेश्वरः" ॥ ५७२ ॥

इत्येवं धर्मकेतोश्च विद्यया हि महर्षयः ।
दीक्षितानां भवेत्स्त्रीणां चाह्निकं कथितं मया ॥ ५७३ ॥

अथाऽहं भद्रकेतोश्च दीक्षितानां च विद्यया ।
वक्ष्येऽहमाह्निकं शुद्धसंमतं धर्मलक्षणम् ॥ ५७४ ॥

देशान्तरगता ये च सान्निधिं स्वगुरोः पुनः ।
समागन्तुमशक्ताश्च शुद्धविद्याभिलाषिणः ॥ ५७५ ॥

ये च सन्ति महाभागाः पुमांसश्च स्त्रियोऽपि वा ।
तेषामेव भद्रकेतुदीक्षा कार्येति कथ्यते ॥ ५७६ ॥

ब्राह्मे मुहूर्ते चोत्तिष्ठत्पुमान्स्त्री वा यथासुखम् ।
देहशुद्धिं विधायादौ विशुद्धवसनः शुचिः ॥ ५७७ ॥

प्राङ्मुखोदङ्मुखो वाऽपि तिष्ठन्बद्धाञ्जलिः स्वयम् ।
वदेन्मङ्गळगायत्रीं देवीं ध्यायन्परां शुभाम् ॥ ५७८ ॥

व्यायामं चाथ दासश्च कुर्यान्नित्यं यथाबलम्।
ततो वस्त्रेण देहं च विशोध्य च मुहुर्मुहुः ॥ ५७९ ॥

घटिकार्धं च विश्राम्य मौनेन सुसमाहितः।
गच्छेद्यथासुखं चैव कानिचिच्च पदानि हि ॥ ५८० ॥

यथोचितं ततः स्नात्वा सलिलेन धृतांबरः।
ततः पुण्ड्रं यथाचारं धृत्वा नियतमानसः ॥ ५८१ ॥

उत्तराऽभिमुखं तिष्ठन्बद्धाञ्जलिपुटः स्वयम्।
वदेच्च सत्यवचनं प्रार्थनालक्षणं परम् ॥ ५८२ ॥

" समस्तसिद्धिसंपन्नहार्देशस्य पुरस्त्वहम्।
प्रार्थये सर्वलोकेभ्यः शुभं नित्यं भवत्विति ॥ ५८३ ॥

ओं नमः श्रीमहर्षिभ्यो योगिभ्य इति कीर्तयेत्।
अथोपविश्य विहिते शुद्धयोगासने वरे ॥ ५८४ ॥

जपेद्विद्यां भद्रकेतोर्ध्यानपूर्वं यथाविधि।
तद्विद्याजपमात्रं च सहध्यानेन शस्यते ॥ ५८५ ॥

जपात्पूर्वं परमपि ध्यानं हि विहितं भवेत्।
इत्थं जपाच्च पूर्वं तु ध्यानमुक्तं विविक्त्य हि ॥ ५८६ ॥

" चिद्रूपं परमं देवं दिव्यमङ्गळविग्रहम्।
कारणं सर्वलोकानां शुद्धे हृदि विभावये" ॥ ५८७ ॥

इति विद्याजपादेवं परं ध्यानं विधीयते।
तच्च शुद्धं निर्गुणं वा भवेदिति हि निर्णयः ॥ ५८८ ॥

जपात्परं च यद्ध्यानं शुद्धं निर्वाणलक्षणम् ।
तेन वै जायते चित्तशङ्कुविज्ञानमुत्तमम् ॥ ५८९ ॥

तच्चित्तशङ्कुविज्ञानात्पश्यत्यात्मानमव्ययम् ।
विशुद्धे मण्डले दासः सर्वभावसमुज्वलम् ॥ ५९० ॥

चित्ताक्षरं च यद्भाति सङ्कल्पादेश्च कारणम् ।
तद्भवेच्चित्तशङ्कुश्चेत्याह दामोदरो मुनिः ॥ ५९१ ॥

चित्ताक्षरे लयादेव योगिनां जायते परा ।
निर्वृतिश्च समाकारा पूर्णविज्ञानलक्षणा ॥ ५९२ ॥

इदं हि राजयोगस्य परमं साधनं भवेत् ।
इदमेव तपश्शब्दवाच्यं स्यादिति निर्णयः ॥ ५९३ ॥

एवं विद्यातपश्चैव सायं प्रातर्विधीयते ।
यथेष्टं जपसंख्या च कथ्यते शुद्धयोगिभिः ॥ ५९४ ॥

रुद्राक्षतुळसीकाष्ठमणिमाला जपाय हि ।
प्रशस्यते विशेषेण पद्मबीजकृता तथा ॥ ५९५ ॥

तथा प्रवाळमालाऽपि स्त्रीणां चेति निगद्यते ।
वज्रमाला तु राज्ञां हि जपार्थं विहिता भवेत् ॥ ५९६ ॥

विद्यया भद्रकेतोश्च दीक्षितानां महर्षयः ।
तद्विद्याजपमात्रं च सह ध्यानेन शस्यते ॥ ५९७ ॥

इत्यार्यैरुच्यते कैश्चिच्छुद्धविद्याधिकारिभिः ।
भगवान्नारदश्चात्र विशेषं प्राह धर्मतः ॥ ५९८ ॥

ऋणत्रयनिर्मुक्ता ये दासाः शुद्धा महर्षयः ।
तेषामेवमाह्निकं च विशेषेण विधीयते ॥ ५९९ ॥

प्राणायामश्च सङ्कल्पः सात्त्विकत्यागपूर्वकः ।
न्यासश्चेति त्रयो मुख्याः कर्तव्यत्वेन निश्चिताः ॥ ६०० ॥

इत्येवं तदुपस्थानं जपात्परमिहोच्यते ।
ध्यानात्परं वाऽपि तथा समन्त्रं भक्तिलक्षणम् ॥ ६०१ ॥

" उत्तमे शिखरे देवि भूम्यां पर्वतमूर्धनि ।
ब्राह्मणेभ्यो ह्यनुज्ञानं गच्छ देवि यथासुखम् " ॥ ६०२ ॥

इत्येवं तदुपस्थानमन्त्रोऽयं विहितो भवेत् ।
उत्तराभिमुखं चैवं मन्त्रमेनमुदीरयन् ॥ ६०३ ॥

बद्धाञ्जलिपुटो दासः प्रणमेत्परदेवताम् ।
इति तस्माद्भद्रकेतुसमये मुनिपुङ्गवाः ॥ ६०४ ॥

भेदोऽधिकारिणांचाऽपि यथारूपं निगद्यते ।
इत्याह्निकं भद्रकेतुसमयानां निरूपितम् ॥ ६०५ ॥

अथाऽहमाह्निकं वक्ष्ये वामदेवस्य विद्यया ।
दीक्षितानां च दासानां शृणुध्वं मुनिपुङ्गवाः ॥ ६०६ ॥

ब्राह्मे मुहूर्ते चोत्थाय देहशुद्धिं विधाय च ।
शुद्धाम्बरधरो धीमानुत्तराभिमुखः शुचिः ॥ ६०७ ॥

वदेन्मङ्गलगायत्रीं बद्धाञ्जलिपुटः स्वयम् ।
व्यायामं चाथ कृत्वा हि यथाविधि यथाबलम् ॥ ६०८ ॥

स्नायाच्च विधिवच्छुद्धसलिलेऽथ धृतांबरः ।
धृत्वा पुण्ड्रं यथाचरं प्राङ्मुखोदङ्मुखोऽपि वा ॥ ६०९ ॥

तिष्ठन्बद्धाञ्जलिश्चैव प्रार्थनालक्षणां च हि ।
सत्यवाचं समुच्चार्य प्रणमेच्छुद्धयोगिनः ॥ ६१० ॥

अर्घ्यदानं ततः कुर्याद्वामदेवस्य विद्यया ।
तुरीयया यथाशास्त्रं ततो योगासने पुनः ॥ ६११ ॥

उपविश्य यथाकलं ततो ध्यानं समाविशेत् ।
इत्थं ध्यानस्वरूपं हि कथ्यते शुद्धयोगिभिः ॥ ६१२ ॥

" शुद्धतेजस्स्वरूपं तमात्मानं निरुपाधिकम् ।
सोपाधिकं सर्वशक्तिसमेतं हृदि भावय ॥ ६१३ ॥

इति ध्यानस्वरूपं च विज्ञाय च यथामति ।
ध्यायन्नात्मानममलं चेतसाऽनन्यगामिना ॥ ६१४ ॥

दासो जपेच्च गायत्रीं षड्विधां ब्रह्मलक्षणाम् ।
जपसंख्या यथाकामं विहिता संप्रदृश्यते ॥ ६१५ ॥

रुद्राक्षतुळसीकाष्ठमणिमाला जपाय हि ।
प्रशस्यते विशेषेण गायत्र्याश्च महर्षयः ॥ ६१६ ॥

जपान्ते च पुनर्ध्येयो ह्यात्मा भवति शाश्वतः ।
शुद्धं वा निर्गुणं वाऽपि ध्यानमत्र विधीयते ॥ ६१७ ॥

ध्यानकालः प्रतिदिनं घटिकाषट्कसंमितः ।
कथ्यते शुद्धशास्त्रज्ञैः परमार्थपरायणैः ॥ ६१८ ॥

ऋणत्रयनिवृत्ता ये वामदेवस्य विद्यया।
दीक्षिताश्च यथान्यायं तेषां वै मुनिपुङ्गवाः ॥ ६१९ ॥

विशेषनियमश्चैवं मुनिभिश्च विधीयते।
प्राणायामश्च सङ्कल्पः सात्त्विकत्यागपूर्वकः ॥ ६२० ॥

उपस्थानं च पूजा च तर्पणं च यथाविधि।
इति सर्वं हि दासानां विहितं स्यात्समन्त्रकम् ॥ ६२१ ॥

भद्रकेतोश्च समये यदुपस्थानमुच्यते।
समन्त्रकं च तच्चात्र दाससेव्यमिति स्मृतिः ॥ ६२२ ॥

उपस्थानावसाने च पूजा हि विहिता भवेत्।
पूजा सेयं हि कथिता चैवं स्यान्मुनिपुङ्गवाः ॥ ६२३ ॥

बिन्दुत्रिकोणषट्कोणवृत्तमष्टदलं तथा।
भूपुरत्रयसंयुक्तं यन्त्रराजं सुखप्रदम् ॥ ६२४ ॥

सकुङ्कुमं च पात्रे तु समालिख्य यथाविधि।
विनाक्षरं च विधिवत्पूजयेत्परदेवताम् ॥ ६२५ ॥

आवाहनार्थो मन्त्रः स्यादयं च मुनिपुङ्गवाः।
आवाहनप्रधाना स्यात्पूजेति च निगद्यते ॥ ६२६ ॥

तुरीयया विद्यया हि भवेदावाहनं पुनः।
योगदेवीस्वरूपाणां देवतानामिति स्मृतिः ॥ ६२७ ॥

सौं बीजेनैव देव्याः स्यान्नीराजनमहो महर्षयः।
क्लीं बीजमर्चनायां तु प्रशस्तं स्यादिति स्मृतिः ॥ ६२८ ॥

अन्यत्र देवीपूजायां वाग्बीजं च समुच्चरेत् ।
नीराजनान्ते दासेन बद्धाञ्जलिपुटेन च ॥ ६२९ ॥

"यया हि बुध्यते ब्रह्म जगत्कारणमव्ययम् ।
तां त्वां देवीं ब्रह्मशक्तिं सदाऽहं शरणं भजे" ॥ ६३० ॥

इत्येषा परमा वाणी दासधर्मानुवर्तिनी ।
वक्तव्येति हि सिद्धान्तः पुराशङ्करभाषितः ॥ ६३१ ॥

एवमुक्त्वाऽथ दासश्च साष्टाङ्गं प्रणमेत्त्रिधा ।
अस्मात्प्रणामादाप्नोति पूजायाः परमं फलम् ॥ ६३२ ॥

अथ दासेन कार्यं स्यात्तर्पणं च समन्त्रकम् ।
एवं स्यात्तर्पणार्थश्च मन्त्रः सर्वार्थसाधकः ॥ ६३३ ॥

प्रणवं पूर्वमुच्चार्य पञ्चबीजानि वै पुनः ।
देवीमिति पदं तस्मात्तर्पयामीति *गां वदेत् ॥ ६३४ ॥

इति मन्त्रेण दासश्च तर्पणानि समाचरेत् ।
तर्पणानां च संख्या हि गायत्रीसंमिता भवेत् ॥ ६३५ ॥

इत्येवं वामदेवस्य समये च यथावयः ।
निगद्यते विशेषश्च केषां चिदधिकारिणाम् ॥ ६३६ ॥

अथाऽहमाह्निकं वक्ष्ये वसिष्ठस्य च विद्यया ।
दीक्षितानां च दासानां तच्छृणुध्वं महर्षयः ॥ ६३७ ॥

"ओं ह्रीं श्रीं क्लीं ऐं सौः देवीं तर्पयामि" इति तर्पणमन्त्रः

आसन्नमरणावस्थाः शुद्धसिद्धान्तविस्तमाः ।
ये सन्ति मनुजा लोके तेषां जन्मान्तरे पुनः ॥ ६३८ ॥

शुद्धधर्मप्राप्तये हि शुद्धविद्याधिकारिभिः ।
वसिष्ठस्य च विद्या हि सयोगमुपादिश्यते ॥ ६३९ ॥

ओमित्येकाक्षरं ब्रह्म वासिष्ठायोपदिश्यते ।
तादृशानां च दासानां नैव कार्यं च विद्यते ॥ ६४० ॥

यदि जीवति वासिष्ठः सर्वेश्वरनियोगतः ।
तस्यैवमाह्निकं प्रोक्तं नारदाद्यैर्महर्षिभिः ॥ ६४१ ॥

निष्ठा परमहंसानां या च शास्त्रैरुदीर्यते ।
वासिष्ठानां च दासानां सा च निष्ठा विधीयते ॥ ६४२ ॥

हंसानां लक्षणं नैव वासिष्ठानां च यद्यपि ।
तथाऽपि हंसकर्मैव वासिष्ठानां विधीयते ॥ ६४३ ॥

अथेत्थं जीवतां चैव वासिष्ठानां महर्षयः ।
लक्षणं यच्च तत्सर्वं यथाशास्त्रं वदाम्यहम् ॥ ६४४ ॥

जटिलो मुण्डितो वापि काषायवसनः शुचिः ।
पादुकायोगदण्डादियोगिलक्षणलक्षितः ॥ ६४५ ॥

कञ्चुकी लोहितोष्णीषो लोकाभ्युदयचिन्तकः ।
चरंश्च सर्वदेशेषु शुद्धशास्त्रस्य शिक्षकः ॥ ६४६ ॥

अमठश्च प्रतिग्रामं निवसेच्च दिनत्रयम् ।
भूमिप्रदक्षिणं चैव वासिष्ठानां विधीयते ॥ ६४७ ॥

वासिष्ठो यश्च दासः स्याच्चैव तस्याह्निकं भवेत् ।
नियतं मन्त्रसंयुक्तं यतो जन्मान्तरं गतः ॥ ६४८ ॥

वासिष्ठदीक्षया चैव स्वस्वभावानुरूपया ।
यदिच्छेदाह्निकं कर्तुं दासो वासिष्ठलक्षणः ॥ ६४९ ॥

तत्सर्वं प्रणवेनैव कुर्यादार्योक्तवर्त्मना ।
वृत्तिर्माधूकरी चैव वासिष्ठानां विधीयते ॥ ६५० ॥

वर्णाश्रमप्रयुक्ताश्च धर्मा वासिष्ठयोगिनाम् ।
नैव सन्तीति सिद्धान्तः पुरा शङ्करभाषितः ॥ ६५१ ॥

ऋणत्रयविनिर्मुक्ता ये च सन्त्यधिकारिणः ।
भवेत्तेषां च दीक्षापि वासिष्ठस्य च विद्यया ॥ ६५२ ॥

वसिष्ठविद्यया ये च दीक्षिता ह्यधिकारिणः ।
संसारमण्डले तेषां नैव कार्यं हि विद्यते ॥ ६५३ ॥

तदेषां शुद्धदासानां जगदभ्युदयार्थिनाम् ।
केवलं शुद्धधर्मस्य शिक्षा स्यात्परमं व्रतम् ॥ ६५४ ॥

सर्वदा प्रणवो जप्यो वासिष्ठैः कर्मयोगिभिः ।
तैरेव ज्ञानिभिर्ज्ञेयः प्रणवार्थः परायणम् ॥ ६५५ ॥

पूज्यः प्रणववाच्यः स्यात्तैश्च दासैर्महर्षयः ।
तेषां वै प्रणवार्थस्य विचारो योग उच्यते ॥ ६५६ ॥

यदन्यदाह्निकं चास्ति कर्तव्यत्वेन निश्चितम् ।
तत्सर्वं हि गुरुभ्यश्च वेद्यं स्यादिति निर्णयः ॥ ६५७ ॥

इत्थं मयाद्य सर्वेषां दासानां पुण्यकर्मणाम्।
आह्निकं च यथाशास्त्रं व्याख्यातं स्याद्यथामति ॥ ६५८ ॥

प्रीणातु भगवान्ब्रह्मा कर्मनाथः प्रजापतिः।
प्रीणातु भगवान्विष्णुर्ज्ञानराजो रमापतिः ॥ ६५९ ॥

प्रीणातु भगवन्रुद्रो भक्तिसेव्यो ह्युमापतिः।
प्रीणन्तु योगिनः सर्वे योगदेवी प्रसीदतु ॥ ६६० ॥

मुनयः—

हंसयोगिन्महाचार्य नमस्ते मुनिसत्तम।
दासानां चैव सर्वेषां प्रत्येकं च यदाह्निकम् ॥ ६६१ ॥

तत्सर्वं कृपया नोऽद्य व्याख्यातं भवता विभो।
सरहस्यं च साङ्गं च यथाशास्त्रं यथाक्रमम् ॥ ६६२ ॥

धन्या ह्यनुगृहीताः स्मो भवता धर्मवत्सल।
वयं सर्वेऽपि तृप्ताः स्मः सांप्रतं योगिनां वर ॥ ६६३ ॥

परं त्वेतच्च पृच्छामो भवन्तं धर्मकोविदम्।
यच्च दासैश्च कार्यं स्याद्दर्शादिषु विशेषतः ॥ ६६४ ॥

यदन्यदपि दासानां कर्म काले विशेषतः।
तच्च सर्वं भवानद्य यथावद्वक्तुमर्हति ॥ ६६५ ॥

हंसयोगी—

धन्यो ह्यनुगृहीतोऽस्मि प्रश्नाद्वोऽहं मुनीश्वराः।
येन दर्शादिकालेषु दासकर्म हि बुध्यते ॥ ६६६ ॥

तं पुण्यकालं वक्ष्यामि पर्वलक्षणलक्षितम् ।
यत्र दासैर्विशेषेण कर्तव्यं कर्म कथ्यते ॥ ६६७ ॥

पूर्णत्वलक्षणश्चैव यश्च कालः सुसेव्यते ।
कर्मिभिः स च कालोयं पर्वाख्य इति कथ्यते ॥ ६६८ ॥

दर्शश्च पौर्णमासी च तथा शुक्रस्य वासरः ।
उत्तराफल्गुनी चैव दशमी शुभलक्षणा ॥ ६६९ ॥

एते पञ्च पर्वकालाः प्रशस्यन्ते विशेषतः ।
एषु दासैः कृतं कर्म विभूत्यै संप्रकल्पते ॥ ६७० ॥

दर्शश्च प्रथमः प्रोक्तो यत्र वै पितरोऽर्चिताः ।
प्राजापत्यं च यच्छन्ति दासेभ्यो हृष्टमानसाः ॥ ६७१ ॥

इत्थं दर्शरहस्यार्थः कथ्यते नारदादिभिः ।
यस्य विज्ञानतो दासाः प्रजावन्तो भवन्ति हि ॥ ६७२ ॥

सूर्याचन्द्रमसोश्चैव सन्निकर्षः परस्तथा ।
विप्रकर्षश्च भवति स्वाभाविकगतेः पुनः ॥ ६७३ ॥

भ्रमतः कालयुक्तस्य जगच्चक्रस्य चोपरि ।
स्वकीये मण्डले सूर्यो भगवान्परिवर्तते ॥ ६७४ ॥

जगत्संसारचक्रस्य ह्यधस्तात्स्वस्य मण्डले ।
चन्द्रमाः शीघ्रगामी च सक्रमं परिवर्तते ॥ ६७५ ॥

एवं च गच्छतोरेव सूर्याचन्द्रमसोः पुनः ।
सूर्यस्य तेजसा चैव यदा चन्द्रश्च सर्वशः ॥ ६७६ ॥

दृश्यते ह्यभिभूतश्च तदा दर्श इतीर्यते ।
सूर्याचन्द्रमसोश्चैव सन्निकर्षः परश्च यः ॥ ६७७ ॥

सोऽयंभवति दर्शश्च ततोऽसौ हि महर्षयः ।
सूर्येन्दुसङ्गमो दर्श इति शुद्धैर्निगद्यते ॥ ६७८ ॥

सर्वस्यैव हि लोकस्य पितरौ तौ सनातनौ ।
भवेतां सूर्यचन्द्रौ चेत्यतश्च मुनिपुङ्गवाः ॥ ६७९ ॥

दर्शे पूजा पितृणां स्यात्कार्या दासजनैः पुनः ।
ततः स्युः सुप्रजानां च स्रष्टारो दर्शसेविनः ॥ ६८० ॥

ब्रह्मणो हि क्रियाशक्तिः सर्जनार्था प्रकाशते ।
कूटस्था चैव यस्मिंश्च स दर्श इति गीयते ॥ ६८१ ॥

अग्निष्वात्तादयो यत्र सङ्गच्छन्ति विशेषतः ।
पितरः स च दर्शः स्यात्पितृमण्डललक्षितः ॥ ६८२ ॥

येनोपलक्षिता चैव जगच्छक्तिर्विशेषतः ।
बीजभूता बुद्धिमती सोऽयं दर्श इतीर्यते ॥ ६८३ ॥

अधश्चोर्ध्वं गतिश्चैव जगच्छक्तेर्निरर्गला ।
अणूनां चैव सर्वेषां जगदंशवतां पुनः ॥ ६८४ ॥

प्रत्येकं च स्वभावे हि काशते सृष्टिकारणम् ।
येन सोऽयं हि दर्शः स्यादिति रीब्रह्मणभाषितम् ॥ ६८५ ॥

अङ्गादङ्गात्संभवस्य कारणं यत्र दृश्यते ।
सोऽयं कालश्च दर्शः स्यादिति शङ्करभाषितम् ॥ ६८६ ॥

यस्मिन्प्रकृतिवृक्षश्च बीजभूतश्च दृश्यते ।
तथाह्यङ्कुरितश्चैव स दर्शं इति कथ्यते ॥ ६८७ ॥

यत्र वै प्राणिनां चैव सर्वेषां हि यथाबलम् ।
वर्धते सृष्टिशक्तिश्च क्रियाशक्त्युपबृंहिता ॥ ६८८ ॥

नानास्वभावयुक्ता च कालतन्त्रा महर्षयः ।
सदर्श इति धीमद्भिः कथ्यते ह्यर्जुनादिभिः ॥ ६८९ ॥

इत्थं सूर्येन्दुशब्दार्थः कथ्यते शुद्धयोगिभिः ।
योगिनो यस्य विज्ञानात्परमार्थं च विन्दति ॥ ६९० ॥

पुंलिङ्गं च परं ब्रह्म पुरुषाख्यं भवेत्स्वयम् ।
पुरुष एवेदं सर्वं सूर्यश्च पुरुषः स्मृतः ॥ ६९१ ॥

स्त्रीलिङ्गं तच्च वै ब्रह्म शक्तिरित्यभिधीयते ।
सर्वं हि ब्रह्मशक्तिः स्याच्चन्द्रमाः शक्तिसंज्ञकः॥ ६९२ ॥

एवं पुरुषशक्त्योश्च सर्वार्थानां निदानयोः ।
सूर्येन्द्वोः सङ्गमादेव जायते पितृमण्डलम् ॥ ६९३ ॥

ईशेशितव्यभावं च प्राजापत्योपशोभितम् ।
तस्मादुभयलिङ्गं स्याद्ब्रह्मेति च निगद्यते ॥ ६९४ ॥

तद्ब्रह्मोभयलिङ्गं च दर्शे दासैरुपास्यते ।
इति तस्माच्च दर्शे तु पितरः सन्ति पूजिताः ॥ ६९५ ॥

चक्रं मान्वन्तरं चैव सूर्यचन्द्रात्मकं तथा ।
कालचक्रं च देहेऽस्मिन्भवतीति हि निर्णयः ॥ ६९६ ॥

कालचक्रस्वरूपाणि यानि चक्राणि सन्ति च ।
तानि चक्राणि सर्वाणि देहेऽस्मिन्नियतानि हि ॥ ६९७ ॥

चक्राणां चैव सर्वेषां भ्रमणस्य हि सर्वशः ।
विरामो नियतश्चेति कथ्यते कालवेदिभिः ॥ ६९८ ॥

तत्तस्य कालचक्रस्य विरामे भ्रमणस्य हि ।
सति तत्कालचक्रेशशक्तेश्चैव महर्षयः ॥ ६९९ ॥

विरामो नियतश्चेति शुद्धार्यैः समुदीर्यते ।
भगवत्कालरूपस्य पुरुषस्याऽऽत्मनश्च हि ॥ ७०० ॥

पराऽभिधा पञ्चदशी जगज्जन्मादिकारणम् ।
शक्तिरूपा कला चैव यदा तु स्वयमेव हि ॥ ७०१ ॥

उपसंहृतरूपा च षोडशं पुरुषं प्रभुम्
प्रपञ्चोपशमं शान्तं पञ्चमं परमेश्वरम् ॥ ७०२ ॥

जगद्बीजं जगद्रूपं शुद्धं च ह्युपसेवते ।
सोऽयं दर्शो भवेच्चेति गणयोगिभिरुच्यते ॥ ७०३ ॥

किं च शक्तेः काला चैव षोडशी योगरूपिणी ।
परान्ता राजते यत्र जगज्जन्मादिकारणम् ॥ ७०४ ॥

यस्मिंश्च सा महादेवी ध्रुवा चैका विराजते ।
सोऽयं कालश्च दर्शः स्यादिति देव्या हि भाषितम् ॥७०५॥

इत्थं च वर्णितो दर्शस्त्रिविधः शुद्धयोगिभिः ।
अमावास्या सिनीवाली कुहूश्चेति निगद्यते ॥ ७०६ ॥

अमावास्याभिधः कालो यः स चेत्थं हि वर्णितः ।
आचार्यैः शुद्धसिद्धान्तवादिभिर्मुनिसत्तमैः ॥ ७०७ ॥

भवन्ति याः कलाः शक्तेः षोडशैव महर्षयः ।
तासां च व्यापकालोका षोडशी या महाकला ॥ ७०८ ॥

अधारशक्तिरूपा च देहिनां देहधारिणी ।
क्षयोदयविहीना च महामायेति सोच्यते ॥ ७०९ ॥

कला सा षोडशी शक्तेर्ब्रह्मरूपा सनातनी ।
अमाशब्दस्य वाच्या स्यादिति योगिभिरुच्यते ॥ ७१० ॥

सेयं देवी महामया ह्युपसंहृतभावया ।
षोडश्या कलया चैव पुरुषं कृष्णपिङ्गलम् ॥ ७११ ॥

अणीयांसमणोश्चैव विभूनां विभुमव्ययम् ।
समालिङ्गय विशुद्धेन भावेनैव हि मोदते ॥ ७१२ ॥

रसो वै स इति श्रुत्या स्तूयते पुरुषस्त्वयम् ।
स सार्धं योगदेव्या च षोडश्या चैव राजते ॥ ७१३ ॥

सा षोडशी महामाया महासूत्रात्मरूपिणी ।
कलाभिः पञ्चदशभिः पूर्णाप्यस्ति रसाश्रया ॥ ७१४ ॥

महाकलेति तामाहुः स्वरयोगपरायणाः ।
स्वरूपेन स्वभावेन नित्या सेत्यपि गीयते ॥ ७१५ ॥

षोडशी सा तिथिश्चैव महातिथिरितीर्यते ।
तिथिचक्ररहस्यार्थवेदिभिर्मुनिपुङ्गवैः ॥ ७१६ ॥

तिथीनां चैव सर्वासां पक्षद्वयविभागतः ।
१ बिन्दुवेदाश्विनीभिश्च ह्यवस्थाः स्युः स्वधर्मतः ॥ ७१७ ॥

यदा तु पञ्चदश्यास्तु तिथेश्चैव तथा पुनः ।
प्रथमायास्तिथेश्चैव श्रीकालान्ते च सङ्गमः ॥ ७१८ ॥

तदाऽमाख्या तिथिर्ज्ञेया षोडशी च महातिथिः ।
तृप्ता भवन्ति पितरः पूजिताश्च महातिथौ ॥ ७१९ ॥

क्षयोदयपराभिश्च सर्वाभिस्तिथिभिर्यतः ।
न मीयते विशेषेण ततः सेयं महातिथिः ॥ ७२० ॥

शुद्धात्मशक्तिरूपा च ध्रुवा योगस्वरूपिणी ।
अमेति कथ्यते शुद्धैः पुरा नागार्जुनादिभिः ॥ ७२१ ॥

प्रथमायाः पञ्चदश्यास्तिथेश्चैव विशेषतः ।
योगो भवति यस्यां हि साऽमावास्या तिथिर्भवेत्॥७२२॥

सेयं तिथिरमावास्या पितृकर्मपरायणैः ।
ऋणत्रयनिवृत्तैश्च दासैः सेव्येति निर्णयः ॥ ७२३ ॥

इत्थं हि पुण्यकालश्च पैतृकस्य च कर्मणः ।
अमावास्यायां च तिथौ कथ्यते शुद्धयोगिभिः ॥ ७२४ ॥

यस्मिंश्च दिवसे लक्ष्म्याः समये च विशेषतः ।
प्रथमायाः पञ्चदश्यास्तिथेश्चैव समागमः ॥ ७२५ ॥

१. बिन्दुवेदाश्विनी, इत्यनेन-२४०-इति संख्या चाभिधीयत, इति विज्ञेयम् ॥

भवेच्च समयः सोऽयं पुण्यकाल इतीर्यते ।
कर्माणि पैतृकाण्येव कर्तुं दासजनैः पुनः ॥ ७२६ ॥

अथ वा च श्रियः कालं व्याप्य पञ्चादशी तिथिः ।
यस्मिन्दिने च सोऽयं स्यात्पुण्यकाल इतीर्यते ॥ ७२७ ॥

दिनद्वये च श्रीकाले यदि पञ्चदशी तिथिः ।
श्रीकालव्यापिनी चैव स्यात्तदा हि महर्षयः ॥ ७२८ ॥

परस्मिंश्च दिने कार्यं पैतृकं तर्पणादिकम् ।
इत्युक्तं कल्पकृद्भिश्च शुद्धैश्चैव महर्षिभिः ॥ ७२९ ॥

किंच यस्मिन्दिने काले चाद्ये पञ्चदशी तिथिः ।
घटिकाधिक्ययुक्ता स्यात्तस्मिन्नेव दिने पुनः ॥ ७३० ॥

पैतृकं कर्म सर्वं हि दासैः सेव्य यथाविधि ।
भवेदिति हि शुद्धैश्च गणयोगिभिरुच्यते ॥ ७३१ ॥

इत्थं हि तर्पणस्यैव पैतृकस्य महर्षयः ।
पुण्यस्थानं च कथितं भवेदध्यात्मकोविदैः ॥ ७३२ ॥

वरः पुण्यनदीदेशो देवतास्थानमेव च ।
अश्वत्थवृक्षमूलं च तीर्थस्थानं महानसः ॥ ७३३ ॥

मूलं च पुण्यवृक्षाणां स्वोद्यानं पुण्यलक्षणम् ।
एवमन्यः शुद्धदेशः पितृपूजार्थमर्हति ॥ ७३४ ॥

इति तस्मात्पुण्यदेशः कर्मणः पैतृकस्य च ।
स्वीकार्यः प्रथमं चेति विधिज्ञैः समुदीर्यते ॥ ७३५ ॥

इत्थं हि कर्मणश्चैव पैतृकस्य विशेषतः ।
विधिश्च दृश्यते तं च यथामति वदामि वः ॥ ७३६ ॥
दासश्च विधिवत्स्नात्वा यथाकालं विशेषतः ।
तिलकं च यथाचारं धृत्वा नियतमानसः ॥ ७३७ ॥
कुशासने समासीनः प्राङ्मुखोदङ्मुखोऽपि वा ।
पवित्रपाणिर्विधिवत्प्राणानायम्य यत्नतः ॥ ७३८ ॥
बद्धाञ्जलिः पितॄन्सर्वान्ध्यायेच्छुद्धेन चेतसा ।
ततः कुर्याच्च सङ्कल्पमष्टाङ्गसमयात्मकम् ॥ ७३९ ॥
सात्विकत्यागयुक्तं च ब्रह्मभावोपलक्षितम् ।
प्राचीनावीतयुक्तेन यज्ञसूत्रेण सर्वशः ॥ ७४० ॥
पैतृकाणि च कर्माणि कर्तव्यानीति निर्णयः ।
कृष्णास्तिलाः कंबलं च शस्यन्ते पितृकर्मणि ॥ ७४१ ॥
सव्यपादसमाच्छन्नगुदस्थानस्तथैव हि ।
दक्षिणांघ्र्यन्तसंच्छन्नपूर्वभागश्च संविशेत् ॥ ७४२ ॥
दक्षिणाऽभिमुखं चैव दासानां पितृकर्मणि ।
संस्थानं विहितं चेति कल्पशास्त्रैरिहोच्यते ॥ ७४३ ॥
अथ दासः कंबलं च समास्तीर्य यथोचितम् ।
तत्र सप्त कुशांश्चैव दक्षिणाग्रान्निवेशयेत् ॥ ७४४ ॥
यथासूत्रं संप्रक्लृप्तैर्मन्त्रैश्च प्रोक्षणार्थकैः ।
१ अमृताग्न्यर्कबीजैर्वा स्थलशुद्धिं समाचरेत् ॥ ७४५ ॥

---

१. अमृताग्न्यर्कबीजैरिति सौः, रं, अं, इति बीजाक्षरैरित्यर्थः ।

स्वशाखानियतैश्चैव मन्त्रैरावाहनादिकाः ।
पूजाः सर्वाः पितृणां हि कर्तव्याः स्युरितीर्यते ॥७४६ ॥

परं तु नियमः प्रोक्तो विशिष्टो मुनिपुङ्गवाः ।
तत्तत्कर्मावसाने च १ मनुमष्टाक्षरं जपेत् ॥ ७४७ ॥

इति शुद्धैर्योगिभिश्च कथ्यते मुनिपुङ्गवाः ।
इत्थं प्रोक्तैश्च नियमैः समन्त्रैः पितृतर्पणम् ॥ ७४८ ॥

कुर्याद्दासो विधानज्ञः परमार्थपरायणः ।
पूजास्वाऽऽवाहनाद्यासु तिलः शुद्धो विशिष्यते ॥ ७४९ ॥

स्वोगोत्रसूत्रसिद्धं हि पैतृकं तर्पणं चरेत् ।
अथवा २ मनुबीजेन मन्त्रेण च समाचरेत् ॥ ७५० ॥

तत्तर्पणात्परं चैव पूर्वं चैव विसर्जनात् ।
पठेच्छ्लोकानिमान्भक्त्या दासो बद्धाञ्जलिः स्वयम् ॥७५१॥

"ओं नमोऽस्मत्पितृभ्यश्च शुक्रेभ्यश्च नमो नमः ।
ओं नमः प्रजापतिभ्यः पितृभ्यश्च नमो नमः ॥ ७५२ ॥

ओं नमो जीवरूपेभ्यो धातृभ्यश्च नमो नमः ।
ओं नमः समभावेभ्यो विधातृभ्यो नमो नमः ॥ ७५३ ॥

१. अष्टाक्षरो मनुश्च—ओं नमो नारायणाय, इति प्रसिद्ध इत्यर्थः ।
२. मनुबीजेन—ओं-ह्रीं-श्रीं-क्लीं-ऐं-सौः-ओं नमो नारायणाय, इति प्रसिद्धबीजाद्यैश्चतुर्दशभिः, इत्यर्थः ।

ओं नमः शुद्धभावेभ्यः स्वधाभ्यो नमो नमः।
ओं नमो ब्रह्मरूपेभ्यो योगिभ्यश्च नमो नमः ॥ ७५४ ॥

ओं नमः पितृरूपाय गणपित्रे नमो नमः।
ओं नमः सर्वरूपेभ्यः पितृभ्यश्च नमो नमः ॥ ७५५ ॥

ओं नमो नारायणाय देवाय परमात्मने।
सर्वेषां कर्मणां शास्त्रे लोकेभ्यः सुखमेधताम् ॥ ७५६ ॥

मया त्वै पैतृकाण्यद्य कर्माणिश्च यथाबलम्।
कृतानि ब्रह्मभावेन महेश्वर पराऽवर ॥ ७५७ ॥

न्यूनातिरेकं यत्किञ्चित्कर्मण्यस्मिश्च दृश्यते।
तत्सर्वं च स्वभावेन क्षमस्व परमेश्वर" ॥ ७५८ ॥

इत्युक्त्वाऽथ च नत्वा हि यथाविधि विसर्जनम्।
करोतु दासो भक्त्या हि पितृणां च यथाक्रमम् ॥ ७५९ ॥

अथाऽपरो दर्शभेदः सिनीवाल्यभिधश्च यः।
तस्येत्थं च स्वरूपं हि विज्ञेयं स्यान्महर्षयः ॥ ७६० ॥

अभिजित्संस्थिते भानौ यदि पञ्चदशी तिथिः।
समागच्छेत्तदा सेयं सिनीवालीति कथ्यते ॥ ७६१ ॥

पुत्रार्थिनो ये च दासा भवन्ति गृहमेधिनः।
तैश्च कार्यं सिनीवाल्यां भवेच्च पितृतर्पणम् ॥ ७६२ ॥

पुत्रसमर्थार्थिनो ये च दासाः स्युर्मूलिकाङ्क्षिणः।
तैश्चापि तस्यां कार्यं स्यात्समन्त्रं पितृतर्पणम् ॥ ७६३ ॥

पूर्वं निरूपिता ये च मन्त्राः साङ्गाश्च सक्रमाः ।
ते भवन्ति सिनीवाल्यां पितॄणां तर्पणाय हि ॥ ७६४ ॥

तृतीयो दर्शभेदो यः कुह्वाख्यः परिकीर्तितः ।
तस्येत्थं स्यात्स्वरूपं च तच्छृणुध्वं महर्षयः ॥ ७६५ ॥

अपराह्णे समागच्छेद्यदि पञ्चदशी तिथिः ।
तथाऽपरदिनाद्यर्या च सा कुहूरिति कथ्यते ॥ ७६६ ॥

वेदमन्त्रासंस्कृताश्च शूद्रा दासाश्च ये मताः ।
तैरेव हि कुहूः पूज्या पितृयज्ञा महेश्वरी ॥ ७६७ ॥

अर्थार्थिनस्तादृशा ये दासाः शुद्धार्यसंस्कृताः ।
तैरप्यैश्वर्यकामैश्च कुहूयज्ञः सुसेव्यताम् ॥ ७६८ ॥

अपुत्रा विधवा याश्च पुनरुद्वाहकर्म च ।
अनिच्छन्त्यो विधानज्ञाः स्वतन्त्राः शुद्धचेतसः ॥ ७६९ ॥

धर्मिष्ठाः परसंसारव्यवसायधियोऽमलाः ।
स्त्रीभिस्ताभिश्च सर्वाभिः कुहूयज्ञः सुसेव्यताम् ॥ ७७० ॥

यः पूर्वं दासयज्ञश्च कथितः स्याद्यथाविधि ।
सोऽयं कार्यो भवेद्दासैः श्रद्धया दर्शपर्वणि ॥ ७७१ ॥

श्वेतकेतोश्च विद्याभिर्दीक्षितैर्नियतात्मभिः ।
दासैः कार्यो भवेद्यज्ञः सोऽयमित्याह शङ्करः ॥ ७७२ ॥

दासानां चैव सर्वेषां यज्ञोऽयं दर्शकालिकः ।
साधारणो भवेच्चेति पुरा नारदभाषितम् ॥ ७७३ ॥

ये वा कल्याणवचसः श्रद्धया परयाऽन्विताः ।
तैश्च दासैस्तु सर्वैः स्याद्यज्ञोऽयं कार्य एव हि ॥ ७७४ ॥

इति शुद्धैर्महाचार्यैर्निर्णीतं धर्मबुद्धिभिः ।
तस्माच्च दासयज्ञोऽयं सर्वैः सेव्य इति श्रुतिः ॥ ७७५ ॥

एवं हि दर्शभेदश्च यथाविधि निरूपितः ।
सयज्ञं सक्रमं चैव प्रीणन्तु शुभमानसाः ॥ ७७६ ॥

द्वितीयं पौर्णिमाख्यं च भवेत्पर्व हि शोभनम् ।
यस्मिंश्च पूजिता देवी योगदेवी महेश्वरी ॥ ७७७ ॥

महालक्ष्मीः शारदा च ह्यन्या देव्यो महर्षयः ।
दासेभ्यः संप्रयच्छन्ति विभूतिं वाञ्छितां पराम् ॥ ७७८ ॥

तस्य स्वरूपं चैवं स्यात्तथा दासैश्च तत्र हि ।
कर्तव्यं कर्म यच्चास्ति तदप्येवं निरूपितम् ॥ ७७९ ॥

सूर्याचन्द्रमसोश्चैव विप्रकर्षः परस्परम् ।
यदा गतिविशेषाच्च जायते हि तदा पुनः ॥ ७८० ॥

पूर्णिमा च भवेच्छुद्धा तिथिर्भूतिप्रदा शुभा ।
स्वभावतस्तिथिः सा च भवेत्पूर्णा परेश्वरी ॥ ७८१ ॥

या देवी ब्रह्मशक्तिश्च कलाभिः शक्तिभिः पुनः ।
षोडशभिश्च संयुक्ता पौर्णमासीति सोच्यते ॥ ७८२ ॥

सैषाऽपि त्रिविधा ज्ञेया स्वरूपाच्च महर्षयः ।
पूर्णा राका चेन्दुमती चेति नारदभाषितम् ॥ ७८३ ॥

लक्षणं तिसृणां चासां ह्येवं प्रोक्तं महर्षिभिः ।
यथार्थं च विशेषेण तच्छृणुध्वं मुनीश्वराः ॥ ७८४ ॥

ब्राह्मकालाऽवसाने च यदि पञ्चदशी तिथिः ।
शुद्धा च समवतरेद्दिने यस्मिंश्च तद्दिनम् ॥ ७८५ ॥

पूर्णया चान्वितमिति नारदादिभिरुच्यते ।
तदेव शुद्धया चैव महातिथ्या विराजते ॥ ७८६ ॥

महातिथिर्हि शुद्धा च देवीतिथिरिति श्रुता ।
तस्यां समर्चिता देवी षोडशी ब्रह्मसंमिता ॥ ७८७ ॥

संप्रयच्छति दासेभ्यो विभूतिं वाञ्छितां पराम् ।
तस्मात्पूर्णा पूर्णमासी दासैः सेव्या विशेषतः ॥ ७८८ ॥

राकाख्या ह्यपरा या च पूर्णमासी महर्षयः ।
तस्याः स्वरूपमित्थं हि विज्ञेयं चाधिकारिभिः ॥ ७८९ ॥

श्रीकालचरमे भागे यदिस्यात्पूर्णिमा तिथिः ।
यस्मिन्दिने दिनं तच्च राकया च युतं भवेत् ॥ ७९० ॥

इति राका विशेषेण श्रीकामैः समुपास्यताम् ।
स्त्रीभिश्चैव विशेषेण राका सेव्येति निर्णयः ॥ ७९१ ॥

तथाऽन्यसमये यस्य दिनस्य च महर्षयः ।
समागच्छेत्पूर्णमासी यदि पञ्चदशी तिथिः ॥ ७९२ ॥

तद्दिनं हीन्दुमत्या तु युक्तमित्येव निर्णयः ।
सेयमिन्दुमती पूज्या पुत्रकामैर्विशेषतः ॥ ७९३ ॥

तस्माच्च पौर्णमासीषु तिसृषु प्रथमैव हि ।
सर्वार्थदेति कथिता कल्पकारैर्महर्षिभिः ॥ ७९४ ॥

त्रिविधासु पूर्णिमासु दासयज्ञश्च शोभनः ।
सर्वैश्च दासैः कार्यः स्यादिति शङ्करभाषितम् ॥ ७९५ ॥

पूर्णायां पूर्णिमायां तु दासैर्विद्यार्थिभिः पुनः ।
सारस्वतो महायज्ञः कार्य इत्याह नारदः ॥ ७९६ ॥

ये च पुत्रार्थिनो दासाः सर्वधर्मविशारदाः ।
तैश्च सेव्यो भवेद्यज्ञः पयोव्रतपरायणः ॥ ७९७ ॥

ज्ञानिनो ये च दासाः स्युः शुद्धसन्यासलक्षणाः ।
तैश्च सेव्यो महायज्ञो ब्राह्मसंज्ञोऽमृतप्रदः ॥ ७९८ ॥

योगिनो ये च दासाः स्युस्त्यागसन्यासलक्षणाः ।
तैश्च सेव्यो महायज्ञो ब्राह्मसंज्ञोऽघनाशनः ॥ ७९९ ॥

ब्रह्मसामीप्यदश्चैव ब्रह्मविज्ञानदायकः ।
यज्ञेनाऽनेन सर्वेऽपि योगिनो यान्ति तत्पदम् ॥ ८०० ॥

ये वा भक्ताश्च दासाः स्युर्ब्रह्मशक्तिपरायणाः ।
तैश्च देवीमहायज्ञः संसेव्य इति गीयते ॥ ८०१ ॥

यं यं कामं कामयन्ते दासाः शुद्धाश्च योगिनः ।
ज्ञानिनः कर्मठा भक्तास्ते च सर्वेऽपि धर्मतः ॥ ८०२ ॥

देवीयज्ञेन तं कामं प्राप्नुवन्ति न संशयः ।
बहुनाऽत्र किमुक्तेन देवीयज्ञोऽखिलार्थदः ॥ ८०३ ॥

भवेदिति हि सिद्धान्तः पूर्वं नारदभाषितः ।
तदेषां विहितानां च यज्ञानां हि यथाफलम् ॥ ८०४ ॥

पूर्णिमायां विधिश्चेत्थं कथितो धर्मकोविदैः ।
तत्रैवं वह्निसंस्कारः सामान्यो ह्यभिधीयते ॥ ८०५ ॥

पार्वतीसमयान्ते च तत्तदर्थस्य याचकः ।
प्रसन्नात्मा च दासश्च स्नातः शुद्धांबरावृतः ॥ ८०६ ॥

चन्द्रोदयं प्रतीक्षंश्च शुचौ देशे वरासने ।
संविशेच्च विधानज्ञः श्रद्धाभक्तिसमन्वितः ॥ ८०७ ॥

उदिते चन्द्रबिंबे च कुर्यादाचमनं त्रिधा ।
प्रणवं पूर्वमुच्चार्य पञ्चबीजानि वै पुनः ॥ ८०८ ॥

स्वाहेति च पदं तस्मादिति मन्त्रो महर्षयः ।
भवेदाचमनार्थश्च सर्वत्रैवं हि बुध्यताम् ॥ ८०९ ॥

ततः पवित्रहस्तश्च प्रणवाद्यैश्च पञ्चभिः ।
बीजैर्यथाबलं चैव प्राणायामं समाचरेत् ॥ ८१० ॥

ततः कुर्याच्च १ सङ्कल्पं ह्यष्टाङ्गसमयान्वितम् ।
सात्विकत्यागपूर्वं च ततो दासो यथाविधि ॥ ८११ ॥

उदकुंभमलंकृत्य यथाशास्त्रं महर्षयः ।
तस्मिन्सपरिवारं च देवं तीर्थपतिं प्रभुम् ॥ ८१२ ॥

१. सङ्कल्पमिति—सङ्कल्पस्य, अष्टावङ्गानि च—संवत्सरः, अयनम्, ऋतुः मासः, पक्षः, तिथिः, वासरः, नक्षत्रम्, इति समयतन्त्रप्रोक्तानि भवन्ति ।

आवाहनादिभिः सर्वपूजाभिश्च समर्चयेत् ।
१पञ्चाक्षरेण ताः पूजाः सर्वाश्चैव समाचरेत् ॥ ८१३ ॥

अथ दासश्च हस्तेन दक्षिणेन यथाविधि ।
संस्पृशन्नुदकुंभं च जपेत्सूक्तं च २वारुणम् ॥ ८१४ ॥

अथसूक्तजपान्ते च वरुणं च यथाविधि ।
यथास्थानं प्रतिष्ठाप्य तीर्थैस्तैर्यज्ञमण्टपम् ॥ ८१५ ॥

"अपसर्पन्तु ये भुता यज्ञघ्नाः कामरूपिणः ।
अपवित्राश्च ये भूता ये च चित्तविमाथिनः ॥ ८१६ ॥
नारायणाज्ञया ते च सर्वे यज्ञविरोधिनः" ।
इति मन्त्रं समुच्चार्य प्रोक्षयेत्प्रथमाश्रमी ॥ ८१७ ॥

सर्वाणि यज्ञद्रव्याणि प्रोक्षयेच्च विशेषतः ।
साकं तीर्थेन शिष्टेन तीर्थैः कुंभं प्रपूरयेत् ॥ ८१८ ॥

पुनः कुंभमलंकृत्य तस्मिश्चैव ३विशेषतः ।
मनुबीजेन मन्त्रेण देवीमावाहयेत्पराम्४ ॥ ८१९ ॥

१. पञ्चाक्षराणि च, प्रथममोमिति प्रणवः, द्वितीयं ह्रीं इति बीजम्, तृतीयं च तत्तद्यजीय देवताबीजम्, ततो नमः, इति द्वे बीजे, इति पञ्चाक्षराणि भवन्ति । २. वरुणसूक्तं च तत्तच्छाखासु प्रसिद्धं "हिरण्यवर्णाः शुचयः पावकाः" इत्यादिकं भवति । ३. मनुमन्त्रेणेति अत्र, मनुमन्त्रेण देवीं विशेषतः आवाहयेत्, इति पदान्वयः । अत्र विशेषतो ह्यावाहनं च, स्वेष्ट नामविशेषं योगदेव्याश्च समुच्चार्य करणमेव, इति तात्पर्यार्थः । ४. परामिति, योगदेव्या विशेषस्वरूपां सरस्वतीत्यादिनामभिरभिहितां देवीम्, इत्यर्थः ।

तथा तेनैव मन्त्रेण सर्वाः पूजाः समाचरेत् ।
पूजान्ते साञ्जलिर्दासः प्रार्थनां च [1]विशेषतः ॥ ८२० ॥

[2]यथायज्ञं [3]यथार्थं च [4]यथाधर्मं समाचरेत् ।
विद्यार्थिनां च दासानां प्रार्थनैवं विधीयते ॥ ८२१ ॥

" ओं ऐं बीजसमुत्पन्नस्वरूपे परदेवते ।
ज्ञानशक्तिस्वरूपेऽच्यें शारदे कमलासने ॥ ८२२ ॥

चतुष्षष्टिकलापूर्णे सर्वविद्याधिदेवते ।
महादेवि नमस्तुभ्यं देहि मे ज्ञानसंपदम् ॥ ८२३ ॥

ओं ऐं ह्रीं श्रीं महाविद्ये महाविष्णुप्रियेऽमले ।
ओं ऐं श्रीं ह्रीं महामाये देहि मे ज्ञानसंपदम् ॥ ८२४ ॥

ओं ऐं क्लीं ह्रीं भूतिविद्ये भूतनाथप्रिये शिवे ।
ओं ऐं श्रीं क्लीं योगविद्ये देहि मे ज्ञानसंपदम् ॥ ८२५ ॥

ओं ऐं क्लीं सौः सर्वसमे समाराध्ये समप्रिये ।
ओं ऐं ह्रीं सौः राजविद्ये देहि मे ज्ञानसंपदम् ॥ ८२६ ॥

योगेश्वरि ब्रह्मविद्ये ब्रह्मरूपे परावरे ।
सरस्वति जगन्मातः कुंभेऽस्मिन्सन्निधिं कुरु" ॥ ८२७ ॥

---

१. विशेषत इति, योगदेव्या विशेषनामोच्चारणेनेत्यर्थः । २. यथायज्ञमिति, तदुक्तयज्ञानामन्यतममनुसृत्य, इत्यर्थः । ३. यथार्थमिति, यथाप्रयोजनमित्यर्थः । ४. यथाधर्ममिति, दासाद्याश्रमं स्त्रीपुरुषधर्मं बाल्याद्यवस्थां च समाश्रित्येत्यर्थः ।

इत्येवं प्रार्थनामन्त्रैः षड्भिश्चैव महर्षयः ।
विद्याधिदेवतायाश्च १दिव्यमाहनं चरेत् ॥ ८२८ ॥

एवं वाग्देवतायाश्च सरस्वत्या महर्षयः ।
कुर्याद्वाग्बीजमन्त्रेण सर्वाः पूजा यथाविधि ॥ ८२९ ॥

दिव्यमिति॰ आवाहनस्य दिव्यत्वमित्थमभिहितं भवति विद्याध्याये—

" दिव्यमावाहनं वक्ष्ये स्थूलबिंबे यथाविधि ।
स्वात्मस्थं पुरुषं दिव्यं योगशक्त्या समन्वितम् ॥

कार्यकारणरूपं च ध्यात्वा हि प्रथमं ततः ।
स्वदेहनायकं देवं परमात्मानमेव च ॥

ध्यात्वा देवीसमाविष्टं सद्दिव्यव्यवसायदम् ।
अथ कोटिरविप्रख्यं निर्गुणं सद्गुणोज्वलम् ॥

व्यवसायाधिनाथं च शक्तिभिस्तिसृभिर्युतम् ।
ध्यात्वा यथासुखं चैव ततः प्राणपतिं प्रभुम् ॥

जीवं स्वदेहराजं च कार्यशक्तिभिरावृतम् ।
ध्यात्वा यथासुखं चाथ सर्वमूलं सनातनम् ॥

अक्षरं क्षरमाणानां ध्यात्वा वासो यथासुखम् ।
अथैवं ब्रह्मरूपं च स्वात्मानं शक्तिसंयुतम् ॥

आवाहयेत्स्थूलबिंबे समन्त्रं च यथाविधि ।
इदमावाहनं दिव्यमिति प्रोक्तं महर्षिभिः ॥" इति

इत्थमैश्वर्यकामानां दासानां च विशेषतः।
मन्त्रोऽयं प्रार्थनागर्भः प्रोक्तो भगवता पुरा ॥ ८३० ॥

"ओं श्रीं ह्रीं क्लीं महादेवि विजये सर्वमङ्गले।
ओं श्रीं क्लीं ह्रीं महाराज्ञि देहि मे संपदं श्रियम् ॥ ८३१ ॥

ओं श्रीं क्लीं ऐं रमे देवि विष्णुवक्षस्स्थलस्थिते।
ओं श्रीं ह्रीं ऐं महालक्ष्मीर्देहि मे संपदं श्रियम् ॥ ८३२ ॥

ओं श्रीं क्लीं सौः सर्ववन्द्ये क्षीराब्धितनये वरे।
ओं श्रीं ह्रीं सौः कामकले देहि मे संपदं श्रियम् ॥ ८३३ ॥

योगैश्वर्ये योगकले योगनारायणप्रिये।
श्रीदेवि जगतां मातः कुंभेऽस्मिन्सन्निधिं कुरु" ॥ ८३४ ॥

इत्येवं प्रार्थनामन्त्रैश्चतुर्भिश्च महर्षयः।
सर्वैश्वर्यप्रदायाश्च श्रियो ह्यावाहनं चरेत् ॥ ८३५ ॥

एवं श्रीदेवतायाश्च महालक्ष्म्या महर्षयः।
कुर्यात् श्रीं बीजमन्त्रेण सर्वाः पूजा यथाविधि ॥ ८३६ ॥

इत्थं वै पुत्रकामानां दासानां च विशेषतः।
मन्त्रोऽयं प्रार्थनागर्भः प्रोक्तो भगवता पुरा ॥ ८३७ ॥

"ओं श्लीं ह्रीं सौः जगन्मातः प्रजासर्गप्रदेऽमले।
ओं श्लीं सौः ह्रीं महागर्भे देहि मे पुत्रसंपदम् ॥ ८३८ ॥

ओं श्लीं ह्रीं सौः लोकगर्भे जीवगर्भे जयावहे।
ओं श्लीं सौः क्लीं सर्वगर्भे देहि मे पुत्रसंपदम् ॥ ८३९ ॥

ओं श्लीं क्लीं सौः ब्रह्मगर्भे शुक्रज्योतिस्स्वरूपिणि ।
ओं श्लीं ह्रीं सौः सूत्रगर्भे देहि मे पुत्रसंपदम् ॥ ८४० ॥

ओं श्लीं ऐं सौः जीवगर्भे सूत्रब्रह्मस्वरूपिणि ।
ओं श्लीं सौः सौः ज्ञानगर्भे देहि मे पुत्रसंपदम् ॥ ८४१ ॥

पुत्रसंपत्प्रदे देवि योगेश्वरि कुलाङ्गने ।
भद्रसेने नमस्तुभ्यं कुंभेऽस्मिन्सन्निधिं कुरु" ॥ ८४२ ॥

इत्येवं प्रार्थनामन्त्रैः पञ्चभिश्च महर्षयः ।
पुत्रैश्वर्यप्रदायाश्च देव्या ह्यावाहनं चरेत् ॥ ८४३ ॥

एवं हि भद्रसेनाया देव्याश्चैव यथाविधि ।
कुर्यात् श्लीं बीजमन्त्रेण सर्वाः पूजा विशेषतः ॥ ८४४ ॥

इत्थमायुष्यकामानां दासानां च महर्षयः ।
मन्त्रोऽयं प्रार्थनागर्भः प्रोक्तो भगता पुरा ॥ ८४५ ॥

"ओं क्रीं ह्रीं क ए ई ल ह्रीं मृतसञ्जीविनीश्वरि ।
ओं क्रौं ह्रीं ह स क ल ह्रीं आयुष्यं देहि मे परम् ॥ ८४६ ॥

ओं क्रें श्रीं स क ल ह्रीं श्रीं दीर्घायुष्यप्रदेऽमले ।
ओं क्रुं ह्रीं श्रीं स क ल ह्रीं ह स क ह ल ह्रीं परे ॥ ८४७ ॥

ओं क्रूं ह्रीं क ए ई ल ह्रीं सर्वकालाधिदेवते ।
ओं क्रः सौः ह्रीं कालतन्त्रे दीर्घायुष्यं च देहि मे ॥ ८४८ ॥

ओं ब्लूं श्रीं ह्रीं सोमविद्ये सुधाधारे सुरेश्वरि ।
ओं क्लीं ह्रीं श्रीं महारण्ये सिद्धेश्वरि शिवप्रिये ॥ ८४९ ॥

ओं क्लैं ह्रीं सौः जीवकले दीर्घकालप्रदे रसे ।
ओं क्रीं ह्रीं श्रीं सूत्रकले दीर्घायुष्यं च देहि मे ॥ ८५० ॥
मृतसञ्जीविनीविद्ये ह्यमृतेऽमृतसुन्दरि ।
महादेवि नमस्तुभ्यं कुंभेऽस्मिन्सन्निधिं कुरु" ॥ ८५१ ॥
इत्येवं प्रार्थनामन्त्रैः षड्भिश्चैव विशेषतः ।
दीर्घायुष्यप्रदायाश्च देव्या ह्यावाहनं चरेत् ॥ ८५२ ॥
कुर्यात्क्रीं बीजमन्त्रेण साङ्गेन हि महर्षयः ।
सर्वाः पूजा महादेव्या यथाविधि यथाक्रमम् ॥ ८५३ ॥
इत्थं वै शान्तिकामानां दासानां हि महर्षयः ।
मन्त्रोऽयं प्रार्थनागर्भः प्रोक्तो भगवता पुरा ॥ ८५४ ॥
"ओं सौः क्रीं श्रीं क्लीं ह्रीं ब्लूं सौः देवदेवि महेश्वरि ।
ओं सौः सौः सौः ह्रीं श्रीं क्लीं सौः देहि मे शान्तिमुत्तमाम्॥
ओं नमो भगवद्रूपे शङ्खचक्रादिलक्षणे ।
भद्रकालि नमस्तुभ्यं देहि मे शान्तिमुत्तमाम् ॥ ८५६ ॥
आर्तसंरक्षणार्थं हि स्वावतीर्णे कलौ युगे ।
महाकालि नमस्तुभ्यं कुंभेऽस्मिन्सन्निधिं कुरु" ॥ ८५७ ॥
इत्येवं प्रार्थनामन्त्रैस्त्रिभिश्चैव महर्षयः ।
शान्तिदाया महाकाल्या दिव्यमावाहनं चरेत् ॥ ८५८ ॥
कुर्यात्पञ्चाक्षरेणैव सर्वाः पूजा यथाविधि ।
इत्थं विशेषतः प्रोक्ता प्रार्थना मन्त्ररूपिणी ॥ ८५९ ॥

वामदेवरहस्यज्ञा गुरवो ये च सन्ति हि ।
तेभ्यश्चैव यथाकामं शिष्टं ज्ञेयमितीर्यते ॥ ८६० ॥

अथ दासः प्रसन्नात्मा प्राङ्मुखः श्रद्धयान्वितः ।
मन्त्रेणोक्तेन विधिवत्प्राणायामं समाचरेत् ॥ ८६१ ॥

ततो यज्ञाभिधानं च फलं चैव विशेषतः ।
उक्त्वा यथाविधि प्रोक्तमष्टाङ्गसमयात्मकम् ॥ ८६२ ॥

सात्त्विकत्यागपूर्वं च सङ्कल्पं तु समाचरेत् ।
ततो यज्ञाग्निसंस्कारान्विधिवच्च समाचरेत् ॥ ८६३ ॥

इत्थं यज्ञाग्निसंस्कारः कथ्यते शुद्धयोगिभिः ।
विद्याधिकारिभिश्चैव धर्मकामैर्महात्मभिः ॥ ८६४ ॥

कुंभस्य दक्षिणे भागे कल्पयेद्विधुमण्डलम्[1] ।
स्वलङ्कृतं विशुद्धं च कुण्डं साग्निं निधापयेत् ॥ ८६५ ॥

परिस्तरणकूर्चांश्च परितो हव्यवाहनम् ।
यथाविधि समास्तीर्य यज्ञपात्राणि शोधयेत् ॥ ८६६ ॥

स्वकमण्डलुतीर्थेन ततस्तानि यथाक्रमम् ।
पात्रासादनदर्भेषु प्रागग्रेषु महर्षयः ॥ ८६७ ॥

अधोमुखानि सर्वाणि स्थापयेत्प्रथमाश्रमी ।
तत्र स्रुक्प्रथमं तस्मादाज्यपात्रं ततो भवेत् ॥ ८६८ ॥

१. विधुमण्डलमिति, सर्वतोभद्राख्यं चतुष्कोणमित्यर्थः ।

प्रोक्षणीपात्रमथ च ब्रह्मपात्रं ततः स्रुवा।
ततश्च समिधश्चेति पात्राणां च क्रमो भवेत्॥ ८६९॥

ततश्च प्रोक्षणीपात्रं समादाय यथाविधि।
तीर्थैरापूर्य तत्राऽपि १ मूलमन्त्रेण पञ्चधा॥ ८७०॥

अभिमन्त्र्याऽथ तत्तीर्थैर्ब्रह्मकूर्चोद्धृतैः पुनः।
प्रोक्षयेद्यज्ञपात्राणि सर्वाणि च महर्षयः॥ ८७१॥

पुनस्तत्प्रोक्षणीपात्रमद्भिरापूर्य तत्र हि।
निधाय दक्षिणे भागे ब्रह्मपात्रं समुद्धरेत्॥ ८७२॥

तीर्थेनापूर्य तत्राऽपि मूलमन्त्रेण तेन हि।
सप्तधा चाऽभिमन्त्र्याग्नेः पुरतश्च निधापयेत्॥ ८७३॥

अथानीयाज्यपात्रं च तदापूर्य घृतेन च।
संस्कुर्यात्तच्च विधिवत्स्रुक्स्रुवे च पुनस्तथा॥ ८७४॥

ततः पुष्पाञ्जलिर्दासो मनसा परमं गुरुम्।
चिन्तयन्नर्चयेदग्निं मन्त्रमेनमुदीरयन्॥ ८७५॥

"ओं योगदे योगपरे योगदेवि महेश्वरि।
ब्राह्मेण तेजसा ते च समाविश्य हविर्भुजम्॥ ८७६॥

गृहाणार्घ्यं मया दत्तं हुतं चैव समन्त्रकम्।
प्रीणातु भगवान्देवो योगनारायणः प्रभुः॥ ८७७॥

१. मूलमन्त्रेणेति, प्रथमं प्रणवः, ततो तत्तद्देवताबीजम्, ततश्चाष्टाक्षरः, इत्यर्थः। एवं सर्वत्र विज्ञेयम्।

ब्रह्मा विष्णुश्च रुद्रश्च तथान्या देवताः पराः ।
महालक्ष्म्यादिदेव्यश्च प्रीणन्तु शुभमानसाः ॥ ८७८ ॥

शुद्धं भूयादिदं कर्म सफलं च विशेषतः ।
त्वत्प्रसादाद्देवमुख नमस्ते क्रतुनायक" ॥ ८७९ ॥

इत्यर्चनां विधायैवं ध्यायेदात्मानमव्ययम् ।
सर्वशक्तियुतं चैव सर्वाभीष्टप्रदं ततः ॥ ८८० ॥

स्वकमण्डलुतीर्थेन तमग्निं परिषेचयेत् ।
मूलमन्त्रेण तेनैव यथायज्ञं महर्षयः ॥ ८८१ ॥

अथाज्यं जुहुयादग्नौ स्रुक्स्रुवाभ्यां यथाविधि ।
समन्त्रकं च मन्त्रोऽयमित्थं हि परिदृश्यते ॥ ८८२ ॥

प्रणवं पूर्वमुच्चार्य १यज्ञनाथांश्च सप्त हि ।
चतुर्थ्यन्तान्समुच्चार्य स्वाहेति च ततः परम् ॥ ८८३ ॥

उक्त्वा चैनं मन्त्रवरं संपश्येत्प्रथमाश्रमी ।
त्यागश्च सात्विकस्तेभ्यश्चैव हि प्रथितो भवेत् ॥ ८८४ ॥

ततश्चाप उपस्पृश्य प्राणानायम्य पूर्ववत् ।
यथायज्ञं यथाकामं कुर्यात्सङ्कल्पमादरात् ॥ ८८५ ॥

संस्कृतेनाज्यपात्रेण गृहीत्वाज्यं विधानतः ।
समन्त्रं जुहुयाद्वह्नौ दासो धर्मार्थकामवित् ॥ ८८६ ॥

---

यज्ञनाथानिति—यज्ञनाथाश्चात्र, कालः, करालः, मनोजवः, सुलोहितः, धूम्रवर्णः, उग्रः, प्रदीप्तः, इति प्रसिद्धा भवन्ति । "काली कराली" इत्यादयो हि सप्त तद्यज्ञनाथानां च शक्तिस्वरूपा भवन्ति । यज्ञनाथाश्च ते यज्ञाग्निपुरुषस्यांऽशभूता इति विज्ञेयम् ।

मूलमन्त्रेण कार्या स्यादष्टोत्तरशताहुतिः ।
इति तद्धोमसंख्या च गुह्यार्यैः समुदीर्यते ॥ ८८७ ॥
ततोऽद्भिरग्निं परितो विधिवत्परिषेचयेत् ।
ततो गृहीत्वा समिधश्चाज्येनाऽभ्यज्य पूर्ववत् ॥ ८८८ ॥
कुर्याद्वह्नौ समन्त्रं हि चाष्टोत्तरशताहुतीः ।
यथायज्ञं हि समिधां नियमश्चेत्थमुच्यते ॥ ८८९ ॥
विद्यार्थिनामपामार्गसमिधो विहितास्तथा ।
दीर्घायुःप्रार्थिनां चैव समिधः पिप्पलस्य च ॥ ८९० ॥
विहिताः स्युस्तथैश्वर्यकामानां हि महर्षयः ।
विहिता बिल्ववृक्षस्य समिधश्च तथैव हि ॥ ८९१ ॥
दासानां शान्तिकामानां पलाशसमिधो वराः ।
तथा हि पुत्रकामानां प्रोक्ताः स्युः समिधः कुशाः ॥ ८९२ ॥
इति दासैर्यथायज्ञं ग्राह्याश्च समिधः पुनः ।
सामान्यतो हि यज्ञानां पलाशसमिधः श्रुताः ॥ ८९३ ॥
ततश्चाप उपस्पृश्य प्राणायामं विधाय हि ।
सङ्कल्पपूर्वकं चैव [1]जयादिं च समाचरेत् ॥ ८९४ ॥
ततश्चाप उपस्पृश्य प्राणायामं विधाय च ।
सङ्कल्पपूर्वकं चैव कुर्यादवभृताहुतिम् ॥ ८९५ ॥
स्रुक्स्रुवाभ्यां यथाशास्त्रं मूलमन्त्रेण च स्वयम् ।
दासः संपूर्णकर्मा च ततोत्तिष्ठेद्यथाविधि ॥ ८९६ ॥

---

१. जयादिमिति—जयादिहोमश्च तत्तच्छाखासु प्रसिद्धस्तत्राऽनुसन्धेयः।

उत्थाय प्राञ्जलिश्चैव प्रार्थयेद्धव्यवाहनम् ।
मन्त्रेणाऽनेन दासश्च श्रद्धया परयान्वितः ॥ ८९७ ॥

"ओं नमस्ते महादेव चतुःशृङ्ग त्रिपात्पर ।
सप्तहस्त महावीर्य द्विमुख त्रिविधोत्तम ॥ ८९८ ॥

ओं नमस्ते देवमुख देवदेव विभावसो ।
अशेषदोषजालघ्न विभो यज्ञेश्वर प्रभो ॥ ८९९ ॥

मन्त्रहीनं क्रियाहीनं भक्तिहीनं हुताशन ।
यद्धुतं तु मया देव परिपूर्णं तदस्तु ते ॥ ९०० ॥

यज्ञः संपूर्णतां यातु योगदेवी प्रसीदतु ।
प्रीणातु धर्मशास्ता च भगवान्परमेश्वरः ॥ ९०१ ॥

नरनारायणौ देवौ महात्मानो महर्षयः ।
प्रीणन्तु प्राणिनः सर्वे त्वत्प्रसादान्महेश्वर ॥ ९०२ ॥

इति चाथ विधानज्ञो दासो धर्मरहस्यवित् ।
अग्नये यज्ञदेवाय प्रणामांश्चतुरश्चरेत् ॥ ९०३ ॥

अथोपविश्य दासश्च ध्यायन्नारायणं गुरुम् ।
प्राणानायस्य विधित्सङ्कल्प्य च यथाविधि ॥ ९०४ ॥

कुंभप्रतिष्ठितायाश्च देव्याः पूजाः पुनश्चरेत् ।
पूजान्ते चैव दासश्च प्राञ्जलिः प्रणिधानतः ॥ ९०५ ॥

"ओं नमो नारायणाय देवाय परमात्मने ।
योगदेवि नमस्तुभ्यमुत्तिष्ठ परमेश्वरि ॥ ९०६ ॥

यज्ञो मे सफलश्चास्तु त्वत्प्रसादाद्वरप्रदे ।
अस्तु मे मानसं शान्तमिष्टार्थप्राप्तितः सदा ॥ १०७ ॥

यज्ञेऽस्मिन्मन्त्रलोपे च क्रियालोपे च सत्यपि ।
अनुष्ठितो यथाशास्त्रं भवेद्देवीप्रसादतः" ॥ १०८ ॥

इति मन्त्रं समुच्चार्य गन्धपुष्पाक्षतादिभिः ।
समभ्यर्च्य च तां देवीमुपस्थानाय चार्थयेत् ॥ १०९ ॥

[1]अथाग्निमात्मन्याधाय यथाशास्त्रं महर्षयः ।
अथोत्थाय च तं कुंभं भगवन्तं हुताशनम् ॥ ११० ॥

त्रिधा प्रदक्षिणं कृत्वा प्रणमेच्च यथाविधि ।
दक्षिणां ब्राह्मणेभ्यश्च दद्याद्दासो यथोचितम् ॥ १११ ॥

कुंभस्थैरर्च्यतीर्थैश्च स्वात्मानं त्वभिषेचयेत् ।
शिष्टतीर्थं च मन्त्रेण प्राश्य तिष्ठेद्यथासुखम् ॥ ११२ ॥

इति प्रोक्तं पौर्णमास्यां दाससेव्यं हि कर्म तत् ।
येन वै पूर्णकामाश्च दासाः सर्वे भवन्ति च ॥ ११३ ॥

अथ शौक्रं च पर्व स्यादित्थं हि मुनिपुङ्गवाः ।
यस्मिन्समर्चिता देवी योगदेवी महेश्वरी ॥ ११४ ॥

संप्रयच्छति दासेभ्यः सौभाग्यमचलां श्रियम् ।
सर्वानन्यांश्च कामान्वै दीर्घायुष्यं विशेषतः ॥ ११५ ॥

---

१. अथेति—अग्नेरात्मन्याधानं च, आत्मसमारोपणमेव । तच्च तत्तद्वेद-विहितमन्त्रेण कार्यं भवति, इति विज्ञेयम् ।

शुक्रश्च भगवानात्मा कार्यरूपः सनातनः ।
तथाकारणरूपश्च शुद्धः स्यादिति कथ्यते ॥ ९१६ ॥

ब्रह्म यत्कालरूपं च सर्वकारणकारणम् ।
तस्याक्षरस्वरूपः स्यादक्षरः शुक्रमण्डलः ॥ ९१७ ॥

अव्यक्तोपासना या च ब्रह्मशास्त्रेषु कथ्यते ।
सैव शुक्रोपासनेति नारदादिभिरुच्यते ॥ ९१८ ॥

अव्यक्तोपासना या च कार्या स्याद्योगिभिः पुनः ।
सा भवेद्विविधा चैव शुद्धाऽशुद्धेति भेदतः ॥ ९१९ ॥

ब्रह्मात्मभूतिदा शुद्धा ह्यन्या प्राकृतभूतिदा ।
भवेदुपासना चेति वासुदेवेन कथ्यते ॥ ९२० ॥

ब्रह्माण्डे च यथा शौक्रं मण्डलं काललक्षणम् ।
नियतं चास्ति धर्मेण तथाऽस्माकं महर्षयः ॥ ९२१ ॥

शरीरे नियतं चास्ति शौक्रमन्यच्च मण्डलम् ।
प्रत्येकं व्यवसायानां तदेतत्कारणं भवेत् ॥ ९२२ ॥

एवं व्याख्यातयोश्चैव शुक्रयोरुभयोरपि ।
यदा हि योगो भवति शौक्रं पर्व तदा भवेत् ॥ ९२३ ॥

तस्मात्पर्वणि शौक्रे च दासैः सर्वैश्च योगिभिः ।
प्रोक्ताः सर्वेऽपि यज्ञाश्च कार्याः स्युरिति निर्णयः ॥ ९२४ ॥

यथाधिकारं दासानां शौक्रे पर्वणि शोभने ।
कथितो यज्ञकालश्च विभज्येत्थं हि कथ्यते ॥ ९२५ ॥

विद्यार्थिनां चदासानां ब्राह्मः कालः प्रशस्यते।
श्रियः कालश्च विहितः श्रीकामानां विशेषतः ॥ ९२६ ॥

दासानां शान्तिकामानां ज्येष्ठायाः समयो वरः।
सोऽयमेव वरः कालो भवेक्षण्णां च कर्मणाम् ॥ ९२७ ॥

स्त्रीणां सौभाग्यकामानां तथा चैव सुखार्थिनाम्।
पुरुषाणां च कालश्च पार्वत्यास्तु विशिष्यते ॥ ९२८ ॥

तं तं कामं कामयतां दासानां वै महर्षयः।
श्रीदुर्गायाश्चैव कालः प्रवरः समयो भवेत् ॥ ९२९ ॥

पुत्रार्थिनां कामिनां च दासानां गृहमेधिनाम्।
विहितो कामयज्ञस्य काल्याः कालो भवेदिति ॥ ९३० ॥

तस्माद्दासो यथाकालं कर्म स्वेप्सितमाचरेत्।
कालश्चैव हि सर्वेषां स भवेत्परमेश्वरः ॥ ९३१ ॥

अथ नक्षत्रपर्व स्यात्तुरीयं काललक्षणम्।
विज्ञानाद्यस्य दासानां कर्तव्यं कर्म शोभते ॥ ९३२ ॥

तन्महाकालचक्रस्य चाङ्गचक्राणि यानि च।
तेषां नक्षत्रचक्रं च भवेदन्यतमं ततः ॥ ९३३ ॥

तेषु नक्षत्रचक्रेषु साङ्गेषु च महर्षयः।
चक्रं चोत्तरफल्गुन्या विहितं दासकर्मणाम् ॥ ९३४ ॥

एवं श्रवणनक्षत्रचक्रं स्यात्पञ्चपर्वसु।
गणितं चेति सिद्धान्तः पूर्वं शङ्करभाषितः ॥ ९३५ ॥

ब्रह्माण्डे च यथा ह्यस्ति चक्रं नक्षत्रसंज्ञकम् ।
तथाऽस्माकं च देहेषु भवेदिति निगद्यते ॥ १३६ ॥

तस्मान्नक्षत्रचक्रेण युक्ते काले यथाविधि ।
उक्ताः सर्वेऽपि यज्ञाश्च यथाकामं महर्षयः ॥ १३७ ॥

दासैः कार्या भवन्तीति पूर्वं शङ्करभाषितम् ।
इति नक्षत्रपर्वोक्तं साङ्गं चैव मया पुनः ॥ १३८ ॥

अथेत्थं हि दशम्याख्यं पर्व [1]शुद्धं च वर्ण्यते ।
यस्मिन्समर्चिता देवी दासेभ्यस्तुष्टमानसा ॥ १३९ ॥

विजयं च यथारूपं संप्रयच्छति धर्मतः ।
तदित्थं दशमीचक्रं काललक्षणलक्षितम् ॥ १४० ॥

ब्रह्माण्डे च यथा चास्ति तथैव हि महर्षयः ।
तिथिचक्रं च देहेषु चास्माकं स्यान्महर्षयः ॥ १४१ ॥

तस्माच्च तिथिचक्रेण युक्ते काले यथाविधि ।
प्रोक्ताः सर्वेऽपि यज्ञाश्च यथाकामं महर्षयः ॥ १४२ ॥

दासैर्भवन्त्यनुष्ठेयाश्चेति शङ्करभाषितम् ।
चतुर्दशी च बहुला तथा शुद्धा च पञ्चमी ॥ १४३ ॥

तथा शुद्धाष्टमी चैव कथिता तिथिपर्वसु ।
यथाकामं दासलोकैः स्वेष्टः कालश्च सेव्यताम् ॥ १४४ ॥

१. शुद्धमिति—पूर्वपक्षीयदशम्यास्तिथेर्ग्रहणम् ।

इत्युक्तं स्याद्यथाशास्त्रं स्वरूपं पञ्चपर्वणाम् ।
पर्वकार्यास्तथा यज्ञाः प्रीणन्त्वद्य महर्षयः ॥ १४५ ॥

इत्थं विशेषविधयः प्रोक्ताः पर्वसु योगिभिः ।
तानद्य संप्रवक्ष्यामि यथादृष्टं महर्षयः ॥ १४६ ॥

दासानां चैव सर्वेषां सर्वेष्वपि च पर्वसु ।
सामान्यो यश्च विहितो यज्ञश्चेत्थं स चोच्यते ॥ १४७ ॥

दासः स्नात्वा यथाकालं शुद्धांबरधरः शुचिः ।
यथाचारं च तिलकं धृत्वा नियतमानसः ॥ १४८ ॥

श्रीकालमध्यमे भागे देशे शुद्धे यथासुखम् ।
कुशासने समासीनः प्राङ्मुखोदङ्मुखोऽपि वा ॥ १४९ ॥

मूलमन्त्रेण चाचम्य सपवित्रो यथासुखम् ।
प्राणानायम्य सङ्कल्पमष्टाङ्गसमयात्मकम् ॥ १५० ॥

यथाकामं यथादेशं वामदेवरहस्यवित् ।
सात्विकत्यागपूर्वं च यथाविधि समाचरेत् ॥ १५१ ॥

प्रोक्तो यथाग्निसंस्कारः पौर्णिमायज्ञकर्मणि ।
पात्राणां नियमश्चाऽपि यज्ञेऽस्मिन्विहितस्तथा ॥ १५२ ॥

औदुंबरस्य समिधश्चतस्रः प्रथमं ततः ।
अश्वत्थसमिधश्चैवं पलाशसमिधस्तथा ॥ १५३ ॥

अपामार्गस्य समिधश्चेत्यस्मिन्नियमो भवेत् ।
यथा स्रुक्स्रुवयोश्चैव संस्कारश्च यथाविधि ॥ १५४ ॥

तथाऽऽप्रपदनद्र्व्योश्च संस्कारो विहितो भवेत्।
एवं दासश्च संस्कारान्यज्ञीयांश्च यथाक्रमम् ॥ ९५५ ॥

पात्रादीनां च सर्वेषां प्रथमं च विधाय हि।
कुर्याद्यज्ञाग्निपूजां च समन्त्रं हि समाचरेत् ॥ ९५६ ॥

"ओं ह्रीं श्रीं र बृहद्भानो यज्ञेश ब्रह्मभूतिद।
दासयज्ञं करोम्यत्र प्रसीद परमेश्वर" ॥ ९५७

इति मन्त्रं समुच्चार्य दासो बद्धाञ्जलिः स्वयम्।
यज्ञेशं प्रणमेद्भक्त्या ततः पुष्पाक्षताञ्जलिः ॥ ९५८ ॥

"सर्वकर्मसमाराध्ये दिव्यमङ्गळविग्रहे।
योगदेवि नमस्तुभ्यं भद्रं मे देहि शङ्करि ॥ ९५९ ॥

अधिष्ठाय यथाकामं संस्कृतं हव्यवाहनम्।
गृहाण वरदे देवि यथाविधि हुतं मया ॥ ९६० ॥

इति मन्त्रं समुच्चार्य वह्निनामभिरष्टभिः।
अर्चयेद्दिक्षु चाष्टासु तं च श्वेताऽक्षतादिभिः ॥ ९६१ ॥

ततो यज्ञपुरुषाय नम इत्यग्निमण्डले।
अर्चयेदथ दासश्च पुनस्तैरेव चाक्षतैः ॥ ९६२ ॥

आत्मने नम इत्युक्त्वा स्वात्मानं च समर्चयेत्।
ततश्चाक्षतशेषैश्च सिद्धान्सन्निहितानिति ॥ ९६३ ॥

ध्यात्वा तानर्चयेद्भक्त्या ततो दासो यथाविधि।
अद्भिश्च मूलमन्त्रेण यज्ञाग्निं परिषेचयेत् ॥ ९६४ ॥

तनो दर्व्या गृहीत्वाज्यं जुहुयान्मन्त्रपूर्वकम्।
मन्त्रश्चैवं विधः प्रोक्तो ब्रह्मनिष्ठैर्महर्षिभिः ॥ ९६५ ॥

प्रणवं पूर्वमुच्चार्य मायाबीजं ततश्च हि।
रमाबीजं कामबीजं चाग्निबीजं ततः परम् ॥ ९६६ ॥

अग्नयेति चतुर्थ्यन्तं स्वाहान्तं हि महर्षयः।
मन्त्रं समुद्धरेद्विद्वान्तेनाग्नौ जुहुयात्ततः ॥ ९६७ ॥

ओं ह्रीं श्रीं ऐं सोमाय स्वाहेति मनुनैव हि।
द्वितीयामाहुतिं कुर्यात्ततो रात्रौ यथाक्रमम् ॥ ९६८ ॥

१चतुष्पादैर्दिव्यमन्त्रैश्चतुर्भिश्च महर्षयः।
औदुंबरादिसमिधामाहुतिं च समाचरेत् ॥ ९६९ ॥

---

१. दिव्यमन्त्रेणेति—" दिव्यमन्त्राश्च चत्वारः, तेषां प्रत्येकमपि भवन्ति पादाश्चत्वारः' इति दानविद्याध्याये व्याख्यातम्। ते च यथाक्रममित्थम्—

१. मन्त्र—ओं श्रीं— —हुं भूत्यै स्वाहा १.
ओं ह्रीं— — रं विभूत्यै स्वाहा २.
ओं सौः— —वं संभूत्यै स्वाहा ३.
ओं ऐं— —लं प्रभूत्यै स्वाहा ४.

२. मन्त्रः—ओं क्लूं श्रीं — — महालक्ष्म्यै स्वाहा १.
ओं त्रीं श्रीं— — अमृतलक्ष्म्यै स्वाहा २.
ओं ह्रिं श्रीं— —वीर्यलक्ष्म्यै स्वाहा ३.
ओं ग्लौं श्रीं— —धैर्यलक्ष्म्यै स्वाहा ४.

अथाऽग्निं मूलमन्त्रेण परिषिच्य च पूर्ववत् ।
आज्यं च स्रुक्स्रुवाभ्यां च गृहीत्वा हि यथाविधि ॥ १७० ॥

कुर्यात्पूर्णाहुतिं दासो १महामन्त्रेण वै ततः ।
प्राणानायम्य सङ्कल्प्य यथाकामं यथाविधि ॥ १७१ ॥

कुर्यात्तण्डुलदानं च ततोऽग्नेश्च महर्षयः ।
आत्मसमारोपणं च वह्नेः कुर्याद्यथाविधि ॥ १७२ ॥

इति विशेषयज्ञं च कार्यं सर्वेषु पर्वसु ।
सिद्धं सर्वार्थदं चैव भगवान्प्राह जैमिनिः ॥ १७३ ॥

३. मन्त्रः—ओं श्रीं ह्रीं— —हुं स्वाहा १.
ओं श्रीं ह्रीं— —हुं स्वाहा २.
ओं श्रीं ह्रीं — —हुं स्वाहा ३.
ओं श्रीं ह्रीं— —हुं स्वाहा ४.

४. मन्त्रः—ओं ह्रीं— —आत्मने ब्रह्मणे स्वाहा
ओं ह्रीं— —आत्मने ब्रह्मणे स्वाहा
ओं ह्रीं— —आत्मने ब्रह्मणे स्वाहा
ओं ह्रीं— —आत्मने ब्रह्मणे स्वाहा

इति विज्ञेया भवन्ति। एवं— —निर्दिष्टयोश्चाङ्कयोर्यथाक्रमम् ,तत्तद्दासस्यैकाक्षरं बीजम् , तत्तद्विद्याबीजं च विज्ञेयं भवति ।

१. महामन्त्रेणेति—ओं ह्रीं श्रीं क्लीं ऐं सौः ओं नमो नारायणाय देवाय परमात्मने स्वाहा, इति महामन्त्रस्वरूपमवगम्यते ।

सामान्योऽयं हि यज्ञः स्याद्दासानां विहितः परः ।
इत्याह भागवान्पूर्वं शङ्करो योगिराट्स्वयम् ॥ १७४ ॥
अशक्ता ये च दासाः स्युर्ये च विद्यार्थिनो मताः ।
अन्तर्वत्न्यश्च या नार्यः सवत्सा याश्च दुर्बलाः ॥ १७५ ॥
आशौचेन च ये ग्रस्ता दरिद्राः क्लिष्टमानसाः ।
स्त्रीहीना भर्तृहीनाश्च व्याधिग्रस्ता विशेषतः ॥ १७६ ॥
ये स्युः श्रद्धाविहीनाश्च दासा यज्ञादिकर्मणि ।
तेषां चैव हि सर्वेषां न यज्ञोऽयं विधीयते ॥ १७७ ॥
दासानां चैव सर्वेषां यज्ञाः सर्वेऽपि योगिनः ।
केवलं देहशुद्ध्यर्थं विहिताः स्युरितीर्यते ॥ १७८ ॥
ते पुष्कलात्मविज्ञानहेतवः स्युरिति स्वयम् ।
नारदः प्राह धर्मात्मा तस्मात्सर्वं समञ्जसम् ॥ १७९ ॥
ये च यज्ञानिमान्सर्वान्कुर्वन्ति श्रद्धयैव हि ।
ते सर्वे संप्रयान्त्येव शुद्धं स्थानं परं च तत् ॥ १८० ॥
सर्वेषां चैव दासानां शुद्धानां वै महर्षयः ।
श्रद्धा हि सर्वयज्ञानां परमं साधनं भवेत् ॥ १८१ ॥
निष्फलः श्रद्धया हीनो भवेद्यज्ञः समन्त्रकः ।
विदुषो यज्ञशीलस्य ब्रह्मभूतिर्ध्रुवा भवेत् ॥ १८२ ॥

मुनयः—

हंसयोगिन्नमस्तेऽस्तु पर्वयज्ञस्त्वया विभो ।
सफलश्च यथाशास्त्रं योगदेवीप्रसादतः ॥ १८३ ॥

व्याख्यातश्च तथा पर्वविशेषविभयः पुनः ।
महत्कौतूहलं नोऽद्य पातु त्वां परमेश्वरी ॥ ९८४ ॥

दासानामेवमुक्तानां कुटुंबे च तथैव हि ।
दासमित्रकुटुंबे वा ह्यनारोग्ये च हिंसके ॥ ९८५ ॥

सति दासेन किं कार्यं शान्तिकर्म शुभावहम् ।
स्ववंश्या बान्धवाश्चैव मित्राणि च धनानि च ॥ ९८६ ॥

सर्वाण्येतानि दासेन रक्षणीयानि वै कथम् ।
पञ्चानां चैव विद्यानां प्रत्येकं हि पुनः प्रभो ॥ ९८७ ॥

अधिकारिस्वरूपं च कीदृशं स्यान्महामुने ।
सर्वमेतच्च नो योगिन्यथावद्वक्तुमर्हति ॥ ९८८ ॥

वयं सर्वे यथाकालं तत्त्वविज्ञानसिद्धये ।
भवन्तमेव शरणं प्राप्तास्मो महितादरात् ॥ ९८९ ॥

हंसयोगी—

शृणुध्वं मुनयः सर्वे लोकसंरक्षणोत्सुकाः ।
सत्यामये च दासानां कुटुंबे च विशेषतः ॥ ९९० ॥

शान्तिकर्म च कर्तव्यं वक्ष्येऽहं लोकशर्मणे ।
वामदेवरहस्यज्ञैर्व्याख्यातं मुनिपुङ्गवैः ॥ ९९१ ॥

प्रणवाद्यैः पञ्चबीजैः स्वाहान्तैश्च महर्षयः ।
तिलहोमश्च कार्यः स्याद्रोगार्तैर्यो यथाविधि ॥ ९९२ ॥

तथा च माषहोमश्च दधिहोमश्च शोभनः।
मृतसञ्जीविनीबीजैरिति शङ्करभाषितम् ॥ ९९३ ॥

सह पत्न्या हि दासेन पतिमत्या स्त्रिया तथा।
सर्वं च रक्षणीयं स्याद्यथाकालं महर्षयः ॥ ९९४ ॥

पञ्चग्राहे यथा प्रोक्तं धनदानं तथैव हि।
दातव्यं धर्मकर्मभ्यो यथाकालं यथाविधि ॥ ९९५ ॥

स्वकुटुंबगुप्तये हि धर्मकार्याय वै तथा।
धनार्जनं न कर्तव्यं दासैः सन्यासिभिः पुनः ॥ ९९६ ॥

शुद्धार्यनियोगादेव शुद्धधर्मस्य गुप्तये।
धनार्जनं हि साधुभ्यो विहितं त्विति कथ्यते ॥ ९९७ ॥

सर्वास्वपि च विद्यासु श्रद्धावन्तोऽधिकारिणः।
भवन्तीति हि सिद्धान्तः पूर्वं नारदभाषितः ॥ ९९८ ॥

अन्यत्सर्वं च वक्तव्यं यदास्ति हि महर्षयः।
वामदेवरहस्यार्थविज्ञादेव हि बुध्यताम् ॥ ९९९ ॥

शुभं भूयात्सदार्येभ्यो लोकेभ्यः सुखमेधताम्।
जीयाच्छ्रीमान्शुद्धधर्मः सर्वलोकेषु सर्वदा ॥ १००० ॥

इति श्रीसनातनधर्मदीपिकायां द्वितीयखण्डे दासाध्याये
तृतीयपटलं संपूर्णम्।

ॐ

## ॥ अथ चतुर्थपटलम् ॥

मुनयः—

हंसयोगिन्महाचार्य नमस्ते योगिनां वर ।
दासानां चैव सर्वेषां प्रत्येकं च यथाविधि ॥ १ ॥

नित्यं नैमित्तिकं चैव शुद्धं चैवाह्निकं पुनः ।
निष्कामं च सकामं च ज्ञानसङ्कल्पमूलकम् ॥ २ ॥

सतां प्रियं यथाकालं पूर्वाचार्यानुशिक्षितम् ।
यौगिकं च विशेषेण व्याख्यातं भवता विभो ॥ ३ ॥

तस्मात्सर्वेऽपि दासाश्च शिक्षिताश्च महात्मभिः ।
कुर्वन्ति व्यवसायांश्च स्वकीयान्शुद्धसंमतान् ॥ ४ ॥

परं तु १ शास्त्रमूला स्याच्छिक्षा चेत्यपि गीयते ।
त्याज्योपादेयविज्ञानं शिक्षयैव हि जायते ॥ ५ ॥

कोन्वत्र शास्त्रशब्दार्थः शास्त्रभेदः कियान्भवेत् ।
कानि शास्त्रस्य नामानि शास्त्राणामुत्तमं च किम् ॥ ६ ॥

एतद्वदितुमिच्छामो त्वन्मुखादेव वै मुने ।
विस्तरेण यथान्यायं तद्ब्रूहि कृपया विभो ॥ ७ ॥

१. शास्त्रमूलेति—सैवेयं हि शिक्षा भवति, यस्याः पुनर्दासानां परप्राप्तिसाधनमभ्यासश्च भवति, इत्यादिशिक्षालक्षणं च शुद्धशास्त्रेषु दृश्यते । सा च न वेदादिमूलेत्यप्यग्रे वक्ष्यते, परं तु सा न वेदाङ्गभूता, शास्त्रमूलेत्याशयेन हि तथोक्तमिति ज्ञेयम् ॥

हंसयोगी—

धन्यो ह्यनुगृहीतोऽस्मि साधु पृष्टं महर्षिभिः ।
इदं गुह्यतमं लोके भवद्भिर्यच्च पृच्छ्यते ॥ ८ ॥

योगदेवीपदांभोजध्यानयोगप्रभावतः ।
तद्वो वक्ष्यामि तत्त्वेन यच्च पृष्टं महर्षिभिः ॥ ९ ॥

१ भवेत्सदसतां चैव देहिनां देहमण्डले ।
सामान्यो व्यवसायश्च स चतुर्धा विभाव्यते ॥ १० ॥

अत एव हि सर्वेषां सर्वं कर्म समं भवेत् ।
तथा सङ्कल्पमूलश्च सोऽयं २ कामः समो मतः ॥ ११ ॥

तथैव हि समं ज्ञानं ३ योगश्चैव समो भवेत् ।
सोऽयं योगो विशुद्धश्च सम एवेति निर्णयः ॥ १२ ॥

सत्येवमधिकारी च सत्यबुद्धिरचंचलः ।
निस्पृहः सर्वकामेभ्यश्चैकभावः ४ सुखाश्रयः ॥ १३ ॥

१. सदसतामिति, विज्ञानिनामास्तिकानां चाधिकारिणाम्, अविज्ञानिनां नास्तिकानां चाधिकारिणाम्, इत्यर्थः । २. काम इति–इच्छा इत्यर्थः । ३. योग इति—योगश्चात्र तदात्मनः सर्वधर्मविनिर्मुक्ताऽवस्थारूप, इति विज्ञेयम । ४. सुखाश्रय इति—सुखशब्दश्चात्र हार्देश्वरार्थकः, तथा च साम्योपदेशपूर्वकम्—

योगी चैव यदा चास्ति तदा शुद्धोऽयमुच्यते।
सैषा स्वाभाविकी शुद्धिः सर्वेषां हि समा भवेत्॥ १४॥

ततो ज्ञानं ततः कामस्ततः कर्म च दैहिकम्।
इति क्रमेण सर्वेषां जायते चाधिकारिणाम्॥ १५॥

अर्थभेदेन सर्वेषां देहिनां च यथाक्रमम्।
चतुर्णां व्यवसायानां यद्यप्यस्ति परस्परम्॥ १६॥

भेदो यथार्थभावश्च तथाप्येषां स्वभावतः।
सामान्यः समभावश्च भवेदेवेति १ निर्णयः॥ १७॥

आत्मनो व्यवसाया ये देहसंबन्धजास्त्रयः।
तेषां २ ब्राह्मे च योगे हि भवेतां तौ सनातनौ॥ १८॥

"ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति।
भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया॥
तमेव शरणं गच्छ सर्वभावेन भारत।
तत्प्रसादात्परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम्"॥

इति, योगगीतायां भगवता प्राप्यत्वेनोपदिष्टं च परमार्थभावमात्मानम्, स्वविज्ञानशक्त्या ह्यनुभवन्त एव दासाद्याः सखाश्रया भवन्ति, इति विज्ञेयम्।

१. निर्णय इति—शास्त्रेऽस्मिंश्च सर्वत्र, निर्णय, इत्यस्य, 'सिद्धान्तः' इति तु नाऽर्थः, किं तु—निर्णयः, निगमः, महीधरः, भरद्वाजः, पराशरः, मिथिलः, वल्लभः, धनपतिः, इति परिगणिता एव महर्षयश्चाष्टौ वाच्या इति विज्ञेयम्। २. ब्राह्म इति—न चाऽत्र योग इत्यनेनैव वक्तव्यार्थसिद्धौ किं च वा

उपक्रमोपसंहारौ सक्रमौ च यथायुगम्।
इति पूर्वैर्नारदाद्यैः प्रोच्यते हि महर्षिभिः॥ १९॥

अत एव हि योगोऽयं व्यवसायेषु गण्यते।
यदात्मशक्तिविज्ञानं भवेत्तद्योगलक्षणम्॥ २०॥

ज्ञानकामकर्मणां च त्रयाणां ह्यधिकारिणाम्।
परप्राप्तेः साधनत्वं यदा स्याच्च तदैव हि॥ २१॥

ज्ञानाद्या व्यवसायाश्च विशुद्धाः सन्ति कीर्तिताः।
त एव पुरुषार्थांश्च जनयन्तीति कथ्यते॥ २२॥

सच्छास्त्रशिक्षिता ये च दासाद्या ह्यधिकारिणः।
तेषां ज्ञानादयः शुद्धा भवेयुरिति निर्णयः॥ २३॥

आत्मशक्तिमविज्ञाय प्राकृतं धर्ममेव हि।
ये च कुर्वन्त्यविद्वांसः स्वार्थावेशप्रदूषिताः॥ २४॥

तेषां तु व्यवसायाश्च त्रयश्चेमे महर्षयः।
अशुद्धा विफलाश्चेति विज्ञेयाः स्युर्मनीषिभिः॥ २५॥

प्रयोजनं योग इत्यस्य विशेषणदानेनेति वाच्यम्, योगस्य हि केवलं सर्वधर्मविनिर्मुक्ताऽवस्थास्वरूपत्वात्। ब्राह्म इति च सति विशेषणदाने 'ब्रह्मशक्तिपरिज्ञानपूर्वक सर्वधर्मविनिर्मुक्ताऽवस्थास्वरूपत्वं योगस्य संजायत इति विज्ञेयम्। अतश्च तादृशस्यैव योगस्य, उपक्रमोपसंहारहेतुत्वं शुद्धशास्त्रे च सर्वत्राऽभिवर्ण्यते।

महात्मभिः शिक्षिता ये सर्वे चैवाधिकारिणः ।
विशुद्धव्यवसायांस्ते कुर्वन्त्येवेति निर्णयः ॥ २६ ॥

शिक्षा महात्मनां सा तु भवेच्छास्त्राऽनुगामिनी ।
लक्षणं चाऽपि शास्त्राणां तदित्थमुपपादितम् ॥ २७ ॥

स्वभावमधिकृत्यैव सर्वेषां चाधिकारिणाम् ।
यथादेशं यथाकालं यथाऽवस्थं च धर्मतः ॥ २८ ॥

त्याज्योपादेयविज्ञानं शास्ति तान्यच्च योगिनः ।
तद्धि शास्त्रं भवेच्चेति पूर्वार्यैः समुदीर्यते ॥ २९ ॥

अनुष्ठेयं च यत्किंचिद्विद्यया विहितं हि तत् ।
लोकधर्मविरुद्धं तु शास्त्रं नाभ्युपगच्छति ॥ ३० ॥

पौरुषेयाऽपौरुषेयाः सर्वा विद्या महर्षयः ।
सर्वदैकस्वरूपत्वाल्लोकाभ्युदयदायिनः ॥ ३१ ॥

न भवेयुरिति प्रोक्ताः शास्त्रं तु न तथा भवेत् ।
यतो लोकस्वभावं तदनुसृत्यैव शास्ति च ॥ ३२ ॥

तस्माच्च शासनाच्छास्त्रं लोकधर्मानुगामि च ।
आज्ञारूपं च तच्च स्यादिति शुद्धैर्निगद्यते ॥ ३३ ॥

सर्वेभ्यः प्रबलं शास्त्रं प्रमाणेभ्यो भवेत्परम् ।
ततो भगवतैवैवं कथ्यते शास्त्रगौरवम् ॥ ३४ ॥

"यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः ।
न स सिद्धिमवाऽप्नोति न सुखं न परां गतिम् ॥ ३५ ॥

तस्माच्छास्त्रं प्रमाणं ते कार्याऽकार्यव्यवस्थितौ।
ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि" ॥ ३६ ॥

इति [1] स्वरूपगीतायां ततः शास्त्रं भवेत्परम्।
प्रमाणं चेति सिद्धान्तः पूर्वं नारदभाषितः ॥ ३७ ॥

भवन्ति शास्त्रभेदाश्च चत्वारस्तत्र योगिनः।
उत्तमं भगवच्छास्त्रं देवशास्त्रं ततो भवेत् ॥ ३८ ॥

तृतीयमार्षशास्त्रं स्याद्योगशास्त्रं ततो भवेत्।
इति भेदश्च शास्त्राणां स्वरूपं चाभिवर्णितम् ॥ ३९ ॥

यदुत्तमं भवेच्छास्त्रं तत्सनातनमुच्यते।
तच्च स्यात्सर्वलोकेशवदनांबुजनिस्सृतम् ॥ ४० ॥

लोकेश्वरश्च भगवान्नरनारायणो मुनिः।
स्वपार्षदैर्यथाकालं सर्वलोकहिताय हि ॥ ४१ ॥

लोकभावाऽनुरूपं च शास्त्रं शुद्धं सनातनम्।
योगब्रह्मपरं चैव परप्राप्तिनिरूपकम् ॥ ४२ ॥

१. स्वरूपगीतायामिति—श्रीभगवद्गीतायाः स्वरूपगीताख्ये चाष्टमेऽध्याये श्लोकद्वयस्याऽस्य च हंसयोगिविरचितभाष्यखण्डरहस्ये हि—तदुक्तलक्षणलक्षितशास्त्रविरुद्धवैदिककर्मणो निष्फलत्वम्, शास्त्रस्यैव हि वेदविहितकार्याऽकार्यव्यवस्थितिजनकत्वं चेति तात्पर्यार्थोऽवगम्यते। ततश्चैवं शास्त्रस्य लक्षणं शास्त्रस्यैव श्रैष्ठ्यं च भगवता समुपदिष्टमिति विज्ञायते।

यथाक्रमं वर्धयति लोकाभावानुभावितः ।
इति शुक्ररहस्ये हि कुमारेण निरूपितम् ॥ ४३ ॥

अतः सोऽयं हि भगवान्धर्मशास्तेति गीयते ।
तस्मादेवं भगवता स्वयमेवाऽभिवर्णितम् ॥ ४४ ॥

"चतुर्धाऽहं विभक्तात्मा चरामि जगतो हितः ।
लोकानां धारणार्थाय १विधानं विदधामि च" ॥ ४५ ॥

इति द्वितीये चाध्याये गीतायाश्च महर्षयः ।
तस्माच्च भगवच्छास्त्रं प्रमाणमिति कथ्यते ॥ ४६ ॥

योगनारायणो देवः प्रवरश्च महात्मनाम् ।
योगदेवीपतिश्चैव भगवानिति कथ्यते ॥ ४७ ॥

स एव धर्मशास्ता च यथाकालं यथास्थिति ।
भवेत्स एव भगवान्कृत्याऽकृत्यव्यवस्थितिम् ॥ ४८ ॥

लोकस्वभावानुरूपां कुरुते लोकनायकः ।
सोऽयमेव हि विद्यार्थान्वियाख्यात्येव यथायुगम् ॥ ४९ ॥

तस्माद्भगवता तेन नारायणमहर्षिणा ।
यथाकालं यथालोकं लोकसंरक्षणाय हि ॥ ५० ॥

यदुक्तं धर्मसेतुभ्यो महर्षिभ्यो विशेषतः ।
तद्भवेत्परमं शास्त्रं भगवच्छास्त्रलक्षणम् ॥ ५१ ॥

१. विधानमिति–शास्त्रमित्यर्थः ।

इति प्राचीनहंसैश्च सत्यधर्मपरायणैः।
निर्णीतं ब्रह्मशास्त्रेषु लोकधर्मपरेषु च ॥ ५२ ॥

तच्च वै भगवच्छास्त्रं नाम्ना चैवं निगद्यते।
शुद्धशास्त्रं ब्रह्मशास्त्रं चात्मशास्त्रं तथैव हि ॥ ५३ ॥

सनातनधर्मशास्त्रमिति तस्मान्महर्षयः।
भगवच्छास्त्रविज्ञानं परप्राप्तिकरं भवेत् ॥ ५४ ॥

भगवान्दक्षिणामूर्तिर्देवो नारायणस्तथा।
कुमाराश्चैव चत्वारो भगवच्छास्त्रशिक्षकाः ॥ ५५ ॥

द्वितीयं देवशास्त्रं स्यात्तदित्थं चोपपादितम्।
विस्तरेण च तस्याऽहं लक्षणं संग्रहेण वः ॥ ५६ ॥

वक्ष्यामि च यथाज्ञानं योगदेवीप्रसादतः।
दुर्लभं तस्य विज्ञानं विना शुद्धार्यदर्शनम् ॥ ५७ ॥

परावेशस्थितेश्चैव योग्यता या च विद्यते।
भगवच्छास्त्रविज्ञानसंजाता च विशेषतः ॥ ५८ ॥

तस्याः स्वीकारविज्ञानं साङ्गं यस्माच्च जायते।
तच्च वै देवशास्त्रं स्यादेतद्भक्तैर्महात्मभिः ॥ ५९ ॥

प्रणीतं चेति सिद्धान्तः शुद्धाचार्यानुसंमतः।
इदं हि भक्तिशास्त्रं स्यादिति तत्सेव्यमुच्यते ॥ ६० ॥

किं च वै देवशास्त्रं तु नैकरूपं हि दृश्यते।
यथादेशं यथाकालं दृश्यते विकृतं यतः ॥ ६१ ॥

तन्नामरूपोपहितं ब्रह्म व्याख्याति शाश्वतम् ।
तस्माद्भागवताश्चैव भक्ता ब्रह्मपरायणाः ॥ ६२ ॥

नानालिङ्गाः शुभाचारा नानारूपाः शुभाश्रयाः ।
वर्तमानाश्च सर्वत्र विराजन्ते विशेषतः ॥ ६३ ॥

तच्च वै देवशास्त्रं च नाम्ना चैवं हि बुद्ध्यते ।
भक्तिशास्त्रं कामशास्त्रमिति तस्मान्महर्षयः ॥ ६४ ॥

शैवं च वैष्णवं चैव बौद्धं गाणपतं तथा ।
शाक्तं सौरं च जैनं च तथा वै योगदर्शनम् ॥ ६५ ॥

तथा च मानसं शास्त्रं तत्त्वविज्ञानलक्षणम् ।
इति १ ब्रह्ममुखाद्यैश्च योगिभिः संप्रकथ्यते ॥ ६६ ॥

योगदेवी महामाया महादेवी महेश्वरी ।
वसिष्ठः सिद्धनाथश्च भरद्वाजो महीधरः ॥ ६७ ॥

द्वैपायनो द्विजः कल्की कपिलः शुक एव च ।
सनकश्च शिवः स्कन्दः प्रह्लादो नारदस्तथा ॥ ६८ ॥

जनार्दनः कामनाथः कृष्णः कमललोचनः ।
एते चान्येऽपि योगीन्द्रा देवशास्त्रप्रवर्तकाः ॥ ६९ ॥

---

१. ब्रह्ममुखाद्यैरिति—ते च—ब्रह्ममुखः, अमृतमुखः, ज्ञानमुखः, भक्तिमुखः, कर्ममुखः, योगमुखः, धर्ममुखः, इति विद्याध्याय प्रसिद्धास्त्वत्र विज्ञेया भवन्ति ।

सर्वदा सर्वदेशेषु लोकसंरक्षणाय हि ।
वर्तन्ते चेति सिद्धान्तः शुद्धयोगिभिराहृतः ॥ ७० ॥

कपिलश्चैव भगवान्देवशास्त्रप्रवर्तकः ।
विद्यासु प्रथिता याश्च दिव्योपनिषदः पराः ॥ ७१ ॥

ताश्च सर्वा देवशास्त्राणीत्याह हि स्वयोगतः ।
तस्मादुपनिषच्छास्त्रं देवशास्त्रमितीर्यते ॥ ७२ ॥

ज्यौतिषं गणितं शास्त्रमङ्कशास्त्रं तथाऽपरम् ।
स्वरशास्त्रं १ भावशास्त्रं स्वरोदयपरं च यत् ॥ ७३ ॥

शास्त्रं तथा २ वृत्तिशास्त्रं तत्सर्वं दैवमुच्यते ।
इति व्याख्याति धर्मात्मा नारदः कालनायकः ॥ ७४ ॥

तृतीयमार्षशास्त्रं स्यात्तच्चैवमभिवर्णितम् ।
कर्मणां ब्रह्ममूलानां यथाकालं च शिक्षकम् ॥ ७५ ॥

राजविद्यास्वरूपं च हंसाद्यैर्यतिभिः पुनः ।
सेवितं ब्रह्मभूतीनां प्रापकं यदनुत्तमम् ॥ ७६ ॥

उत्तमाभयदं चैव शरणागतिलक्षणम् ।
यच्च तद्धि कर्मशास्त्रं ह्यार्षशास्त्रं भवेदिति ॥ ७७ ॥

१. भावशास्त्रमिति—परहृदयविज्ञानसाधनं शास्त्रमित्यर्थः । २. वृत्ति-शास्त्रमिति, अर्थशास्त्रमित्यर्थः ।

रामायणं महार्थं च १ शुद्धकर्मप्रवर्तकम् ।
यथाधिकारं सर्वेषां पुरा वाल्मीकिना कृतम् ॥ ७८ ॥

आर्षगीतासनाथं च ह्यार्षधर्मोपशोभितम् ।
आर्षशास्त्रं भवेच्चेति प्रोक्तं ब्रह्ममुखादिभिः ॥ ७९ ॥

कृष्णो वल्मीकजन्मा च पिङ्गलः सिद्धनारदः ।
वसिष्ठो जाजलिश्चैव निर्णयाद्या महर्षयः ॥ ८० ॥

एवमन्ये च मुनयश्चार्षशास्त्रप्रवर्तकाः ।
भवन्तीति पुरा प्रोक्तं नन्दिदेवेन योगिना ॥ ८१ ॥

आर्षोपनिषदश्चैव विद्यासु परिकीर्तिताः ।
विलुप्ताः सन्ति कालेन ताश्च सर्वा महर्षयः ॥ ८२ ॥

इत्युक्तानां च शास्त्राणां त्रयाणां वै महर्षयः ।
प्रत्येकं पञ्च भेदाः स्युरित्युक्तं नारदादिभिः ॥ ८३ ॥

एवं ये पञ्च भेदाश्च विज्ञेयत्वेन कल्पिताः ।
ते चाधिकरणनाम्ना कथ्यन्ते श्रुतिभिः पुनः ॥ ८४ ॥

ततो भवेद्योगशास्त्रं तुरीयं ब्रह्मलक्षणम् ।
तच्चैवं वर्ण्यते शुद्धैर्धर्माद्यैश्च महर्षिभिः ॥ ८५ ॥

१. शुद्धकर्मप्रवर्तकमिति, सर्वधर्मपरित्यागपूर्वकसर्वेश्वरशरणागतिरूपकर्मबोधकमित्यर्थः ।

तदेव योगशास्त्रं स्याद्यन्नानात्वधियं पुनः।
परिहृत्य यथाकालं यथाधर्मं यथास्थिति ॥ ८६ ॥

शुद्धमेकत्वविज्ञानं सर्वांश्चैवाधिकारिणः।
शिक्षयत्यात्मभावेन ब्रह्मभावेन वा पुनः ॥ ८७ ॥

इति तस्माद्योगशास्त्रमध्येयं दासधर्मगैः।
तैः सर्वभावोपरतैर्विद्वद्भिश्चेति गीयते ॥ ८८ ॥

आत्मनो व्यवसायानां प्रकृतौ भवतां तथा।
तत्तद्भावानुरूपाणां त्रयाणां सिद्धवर्त्मनाम् ॥ ८९ ॥

तत्तच्छक्तेश्च जातानां दैव्या शक्त्या हि योजनम्।
परमात्मभावगर्भं यच्च शिक्षयति स्वयम् ॥ ९० ॥

दृष्ट्या हि समया चैव दासान्सर्वान्विशेषतः।
तच्च वै योगशास्त्रं स्यादित्यार्षा मुनयो विदुः ॥ ९१ ॥

नान्तःप्रज्ञं न बहिष्प्रज्ञं नोभयतः प्रज्ञं च।
न प्रज्ञानघनं चैव न प्रज्ञं च तथा पुनः ॥ ९२ ॥

नाऽप्रज्ञं च ह्यदृष्टं च ह्यव्यवहार्यमेव च।
तथाऽग्राह्यमलक्षणमचिन्त्यमव्यपदेश्यम् ॥ ९३ ॥

ऐकात्म्यप्रत्ययसारं प्रपञ्चोपशमं शिवम्।
ब्रह्माऽद्वैतं तुरीयं च सर्वांश्चैवाऽधिकारिणः ॥ ९४ ॥

यच्च वा शास्ति शास्त्रं हि विज्ञेयत्वेन योगिनः।
तद्धि शास्त्रं महाशास्त्रं सत्यशास्त्रं तथैव च ॥ ९५ ॥

ब्रह्मशास्त्रं योगशास्त्रमिति पूर्वैर्महर्षिभिः ।
कथ्यते सनकाद्यैश्च तदिदं शुद्धसम्मतम् ॥ ९६ ॥

शुद्धविज्ञानशास्त्रं च परप्राप्तिसुसाधनम् ।
योगशास्त्रं भवेच्चेति शुद्धार्यैः समुदीर्यते ॥ ९७ ॥

गुरुपरंपरायाश्च तत्त्वं विज्ञाय शाश्वतम् ।
परिभाव्य चिरं साक्षादनुभूय मुहुर्मुहुः ॥ ९८ ॥

संयोगं विप्रयोगं च तथा योगं च शाश्वतम् ।
शुद्धं च परमे तत्त्वे यथाकालं यथाक्रमम् ॥ ९९ ॥

वीक्ष्य दृष्ट्या विशुद्धया चाद्यभावोपजीवया ।
संस्थितेन पराविष्टस्वरूपेण महात्मना ॥ १०० ॥

परित्राणाय साधूनां यच्च शास्त्रं समीरितम् ।
तच्च वै योगशास्त्रं स्यादिति श्रीकृष्णभाषितम् ॥ १०१ ॥

महच्च भारतं शास्त्रं शुद्धं व्यासाधिकारिभिः ।
व्याख्यातं च यथाकालं ब्रह्मलक्षणलक्षितम् ॥ १०२ ॥

योगशास्त्रमिति प्रोक्तं पुरा भगवता पुनः ।
तस्माच्च भगवद्गीता योगब्रह्मस्वरूपिणी ॥ १०३ ॥

मध्ये महाभारतं च ग्रथितं कृष्णयोगिना ।
ततश्च भारतं शास्त्रं योगशास्त्रमितीर्यते ॥ १०४ ॥

शास्त्रेष्वपि च सर्वेषु जीवभूतं सनातनम् ।
योगशास्त्रं भवेच्चेति पुरा शङ्करभाषितम् ॥ १०५ ॥

योगनारायणात्स्कन्दं स्कन्दात्सामं महागुरुम् ।
सामात्कुमारान्तेभ्यश्च ब्रह्मलस्थान्मुनीन्पुनः ॥ १०६ ॥

तेभ्यश्च शंबलस्थांश्च महर्षींस्तेभ्य एव हि ।
महात्मनश्चेति शास्त्रं योगाख्यं च महर्षयः ॥ १०७ ॥

परंपराप्राप्तमिति कथितत्वान्महर्षिभिः ।
न विद्यापदमन्वेति योगशास्त्रमितीर्यते ॥ १०८ ॥

परंपराऽस्य शास्त्रस्य वह्नी स्यादिति कथ्यते ।
कुमाराश्च महात्मानो दक्षिणामूर्तिरेव च ॥ १०९ ॥

नरनारायणो देवो भगवान्नारदस्तथा ।
कपिलः कमलाक्षश्च बुद्धश्च गुरुवल्लभः ॥ ११० ॥

कृष्णद्वैपायनो व्यासो वासुदेवः सुरोत्तमः ।
शुकश्चेति प्रसिद्धाश्च योगिनः पुण्यलक्षणाः ॥ १११ ॥

योगशास्त्रकुलाचार्या भवन्तीति हि बुध्यते ।
योगशास्त्राधिकारी च सम एवेति निर्णयः ॥ ११२ ॥

इत्युक्तानां च शास्त्राणां चतुर्णां हि महर्षयः ।
भगवच्छास्त्रादिभेदः प्रत्येकं चाऽपि धर्मतः ॥ ११३ ॥

भवेत्ततश्च शास्त्राणि १ कलया गणितानि च ।
प्रत्येकमपि तेषां हि पञ्च भेदा भवन्ति च ॥ ११४ ॥

१. कलयेति, कला चात्र षोडशसंख्या, तथा च षोडशसंख्यागणितानि, इत्यर्थः ।

तस्माच्च गणितं शास्त्रं तन्नवत्या भवेदिति ।
भगवान्प्राह धर्मात्मा कृष्णो योगिनां वरः ॥ ११५ ॥

सामान्यतो भवेच्छास्त्रं तच्चतुर्विधमेव हि ।
तद्वै विशेषगत्या तु ह्यनन्तमिति गीयते ॥ ११६ ॥

इति शास्त्रस्वरूपं च सविशेषं निरूपितम् ।
शास्त्रवित्परमं स्थानं प्राप्नोत्येव न संशयः ॥ ११७ ॥

मुनयः—

हंसराज महाचार्य नमस्ते शास्त्रवित्तम ।
शास्त्राणां पञ्च भेदाश्च ये च वै कथितास्त्वया ॥ ११८ ॥

तेषां स्वरूपं भगवन्विस्तरेण वदस्व नः ।
त्वत्तोऽन्यः शास्त्रतत्त्वं तन्न च वक्तुमिहार्हति ॥ ११९ ॥

हंसयोगी—

यानि शास्त्राणि चत्वारि कथितानि महर्षयः ।
प्रत्येकमपि तेषां तु पञ्च भेदा ह्युदीरिताः ॥ १२० ॥

तेषां चैव हि पञ्चानां स्वरूपं चेत्थमुच्यते ।
तच्च गुप्तं हि सर्वत्र विज्ञेयमधिकारिभिः ॥ १२१ ॥

प्रथमं ह्यधिलोकं च शास्त्रं स्यात्परिकीर्तितम् ।
ततोऽधिज्यौतिषं चैव द्वितीयं स्यात्ततः पुनः ॥ १२२ ॥

अधिविद्यं तृतीयं स्यात्ततोऽधिप्रजमेव हि।
तुरीयं स्यात्ततोऽध्यात्मं शास्त्रं तत्पञ्चमं भवेत् ॥ १२३ ॥

सर्वाण्येवं विधान्येव शास्त्राणि च महर्षयः।
व्याख्यान्त्यर्थानशेषांश्च सम्यग्वै बुद्धिगोचरान् ॥ १२४ ॥

ततो धीगोचरं ब्रह्म शास्त्रज्ञैः समुपास्यते।
न बुद्धेर्गोचरं ब्रह्म यच्च तन्न ह्युपास्यते ॥ १२५ ॥

परं तु चास्ति ब्रह्मेति केवलं ज्ञानमेव तत्।
पण्डितानामास्तिकानां भवेदित्येव निर्णयः ॥ १२६ ॥

एवं विभागं शास्त्रेषु विद्यमानं स्वभावतः।
मोहाद्यो न विजानाति स चाऽधो गतिमेष्यति ॥ १२७ ॥

एवं भेदाश्च विद्यासु सर्वास्वपि भवन्ति च।
ततश्चाऽस्य विभागस्य वेत्तारो ह्यधिकारिणः ॥ १२८ ॥

शास्त्रेष्वपि च सर्वेषु तथा विद्यासु सङ्गतान्।
सर्वार्थांश्च विजानन्ति गुप्तान्सर्वत्र योगिनः ॥ १२९ ॥

यथाशास्त्रं यथाविद्यं चार्थान्सर्वान्विशेषतः।
निर्णयेच्च विभागज्ञो ह्यन्यथा स्याद्विमूढधीः ॥ १३० ॥

अविज्ञाय विभागं च शास्त्राणां वै महर्षयः।
ये च सन्ति हि शास्त्रज्ञाः न तेषामर्थनिर्णयः ॥ १३१ ॥

अतो विभागः शास्त्राणां नियतश्चेति गीयते।
सोऽयमावश्यकश्चैव भवेदेवेति निर्णयः ॥ १३१ ॥

इदमत्र हि विज्ञेयं तत्त्वं हि मुनिपुङ्गवाः ।
पुरा भगवता प्रोक्तं नारदेन महात्मना ॥ १३३ ॥

अणूनां चैव सर्वेषां प्राकृतानां यथाक्रमम् ।
प्रत्येकं योग्यता चैव स्वानुरूपा तथा पुनः ॥ १३४ ॥

कर्माऽपि तदनुरूपं विद्यते चेति बुध्यते ।
द्वयमेतच्चाऽधिकृत्य व्यवहारः पृथक्पृथक् ॥ १३५ ॥

जायते सर्वलोकेषु व्यवहारश्च तादृशः ।
अयमन्यश्चाऽयमन्य इति सर्वत्र दृश्यते ॥ १३६ ॥

अर्थानां योग्यता चैव गुण इत्युच्यते बुधैः ।
गुणकर्मविभागेन जायते वस्तुधीः पुनः ॥ १३७ ॥

गुणकर्मविहीनस्य न भवेच्च हि लक्षणम् ।
गुणकर्माऽभियुक्तस्य वस्तुनो लक्षणं भवेत् ॥ १३८ ॥

अत एवाऽह भगवान्वासुदेवो जनार्दनः ।
अधिकारविधानं च गीतायां चेत्थमेव हि ॥ १३९ ॥

'चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः ।
तस्य कर्तारमपि मां विद्ध्यकर्तारमव्ययम् ॥ १४० ॥

इति तस्माद्विभागश्च स भवेद्गुणकर्मजः ।
नित्यश्चेति हि सिद्धान्तः सर्वत्र परिबुध्यते ॥ १४१ ॥

एवं च प्राकृताणूनां योगेन च सनातनः ।
सोऽयमात्मा विशुद्धश्च स्वशक्त्योपहितः स्वयम् ॥ १४२ ॥

देवतिर्यङ्मनुष्यादिव्यवहारस्य गोचरः ।
भाति नानास्वरूपश्च नानाभावसमन्वितः ॥ १४३ ॥

इति तस्माच्छास्त्रमपि चाधिलोकादिभेदतः ।
वर्तते चेति विज्ञेयं शुद्धशास्त्रानुशिक्षितैः ॥ १४४ ॥

ये च शास्त्रेषु विद्यासु निर्दिष्टाः शास्त्रकर्तृभिः ।
विद्याप्रवर्तकैश्चापि ह्यधिकारा महर्षयः ॥ १४५ ॥

इन्द्राद्याश्च तथा सप्त ऋषयो मनवस्तथा ।
अवतारपुरुषाश्च तथाऽन्ये ह्यधिकारिणः ॥ १४६ ॥

सन्ति तेषां १ यथाशास्त्रं स्वरूपं २ धर्मलक्षणम् ।
सविमर्शं च विज्ञेयं शास्त्रविद्याधिकारिभिः ॥ १४७ ॥

अधिलोकशास्त्रवाच्या ये चेन्द्राद्यधिकारिणः ।
न तेऽन्यशास्त्रवाच्याः स्युरिति ज्ञेयं मनीषिभिः ॥ १४८ ॥

इतिहासश्च सुमहानिन्द्रादीनां महर्षयः ।
दृश्यते शास्त्रविद्यासु तत्र तत्त्वं विचार्यताम् ॥ १४९ ॥

हृदये चेन्द्रवाच्यश्च यः पुमान्समुपास्यते ।
न स गौतमपत्नीं तु जहारेति हि बुध्यते ॥ १५० ॥

ब्रह्मवर्चसकामश्च विश्वामित्रश्च यो भवेत् ।
न भवेत्स च गायत्र्या मातुश्च छन्दसामृषिः ॥ १५१ ॥

१. यथाशास्त्रमिति—अधिलोकादिशास्त्रमनुसृत्येत्यर्थः । २. धर्मलक्षणमिति—धर्मबोधकमित्यर्थः ।

विद्याविभागकर्ता च यश्च व्यासो महामतिः ।
न भवेत्स च धर्मात्मा योगशास्त्रप्रवर्तकः ॥ १५२ ॥

यः पङ्क्तिरथमन्त्री च वसिष्ठो यमिनां वरः ।
स चाऽयं गणितो ह्यस्ति न च सप्तर्षिमण्डले ॥ १५३ ॥

इत्यादिकथितं चास्ति सप्रमाणं महर्षयः ।
पुरा [1]शुद्धरहस्ये हि नारदाय महात्मना ॥ १५४ ॥

तस्माच्च संज्ञाशब्दानामिन्द्रादीनां महर्षयः ।
यथाशास्त्रविभागं हि विज्ञेयोऽर्थो भवेत्परः ॥ १५५ ॥

अधिलोकादिशास्त्रानुरूपमेव महर्षयः ।
शब्दार्थमभिजानन्ति शास्त्रविद्याविशारदाः ॥ १५६ ॥

अन्यथा जायते मोहो भवेच्छब्दार्थनिर्णये ।
कथा त्वेकस्वरूपैव सर्वत्र परिदृश्यते ॥ १५७ ॥

तस्माद्विभागविज्ञानं शास्त्राणां वै महर्षयः ।
आवश्यकं भवेदेव सर्वेषां चाधिकारिणाम् ॥ १५८ ॥

च तस्माद्भवेयुरिन्द्राश्च सप्त चाऽपि महर्षयः ।
तथाऽधिकारिणश्चान्ये पञ्चैवेति हि निश्चयः ॥ १५९ ॥

लोकान्तरगतानर्थानधिकृत्यैव यच्च हि ।
धर्मान्विधत्ते तच्छास्त्रं ह्यधिलोकमितीर्यते ॥ १६० ॥

१. शुद्धरहस्ये इति—शुद्धरहस्यं च भगवता कुमारेण नारदायोपदिष्ट-मिति, विज्ञायते ।

मण्डलं ज्योतिषां चैव तदीशांश्चाधिकृत्य हि ।
धर्मानावेदयेद्यश्च तदधिज्यौतिषं भवेत् ॥ १६१ ॥

विद्यास्तद्देवताश्चैव यच्छास्त्रमधिकृत्य हि ।
धर्मान्शास्ति विशेषेण चाधिविद्यं तदुच्यते ॥ १६२ ॥

अधिकृत्य प्रजाश्चैव तदीशांश्च विशेषतः ।
धर्मं वदति यच्छास्त्रं तदधिप्रजमुच्यते ॥ १६३ ॥

आत्मानं च परं ब्रह्म चाधिकृत्य विशेषतः ।
धर्मान्व्याख्याति यच्छास्त्रं तदध्यात्ममितीर्यते ॥ १६४ ॥

इति शास्त्रविभागार्थो वेद्यो भवति योगिनः ।
विशेषतोऽत्र वक्तव्यं यद्यदस्ति मया पुनः ॥ १६५ ॥

शास्त्रे शुद्धरहस्ये हि तच्च सर्वं निरूपितम् ।
इति वः शास्त्रमाख्यातं सविशेषं महर्षयः ॥ १६६ ॥

मुनयः—

भगवन्शास्त्रतत्त्वं च भवता सम्यगेव हि ।
व्याख्यातं च विशेषेण नमस्ते मुनिसत्तम ॥ १६७ ॥

या च विद्येति कथिता भवता धर्मकोविद ।
तस्याः स्वरूपमिच्छामो विज्ञातुं च भवन्मुखात् ॥ १६८ ॥

हंसयोगी—

विद्यास्वरूपं वक्ष्यामि पूर्वाचार्याऽभिवर्णितम् ।
यथाविभागं साङ्गं च शृणुध्वं मुनिपुङ्गवाः ॥ १६९ ॥

आत्मनो ज्ञानशक्तेश्च विकासस्य हि कारणम् ।
स्वभावेन च या ह्यस्ति सा विद्येति निगद्यते ॥ १७० ॥

विद्या तु द्विविधा प्रोक्ता प्रथमं श्रुतिभिः पुनः ।
पराऽपरेति भेदेन परा विद्या १ महामनुः ॥ १७१ ॥

समस्तव्यस्तरूपत्वात्पराविद्याऽपि सा द्विधा ।
परमाऽपरमा चेति तदर्थश्चेत्थमुच्यते ॥ १७२ ॥

आत्माऽनात्मस्वरूपं च यद्ब्रह्माऽस्ति सनातनम् ॥
तच्च व्यष्टिस्वरूपेण प्रणवेनाऽभिवर्ण्यते ॥ १७३ ॥

शुद्धं च केवलं ब्रह्म सर्वभावविवर्जितम् ।
एकं शान्तं शिवं चैव यच्चाऽस्ति हि महर्षयः ॥ १७४ ॥

तद्वै समष्टिरूपेण प्रणवेनाऽभिवर्ण्यते ।
इति सा हि परा विद्या द्विविधा चास्ति कीर्तिता ॥१७५।

अपरा या च विद्या स्यात्सेयं हि २मनुसंख्यया ।
गणिता चास्ति सा चैवं वर्ण्यते पूर्वसूरिभिः ॥ १७६ ॥

साङ्गा वेदाश्च चत्वारो मीमांसा न्याय एव च ।
पुराणानि स्मृतिश्चेति केचिदार्या महर्षयः ॥ १७७ ॥

या च ह्यपरविद्या तां कलया गणयन्ति हि ।
तथा सतीतिहासश्च योगश्चैव विशेषतः ॥ १७८ ॥

१. महामनुरिति—महामनुश्चात्र प्रणव इत्यर्थः । २. मनुसंख्ययेति—चतुर्दशसंख्ययेत्यर्थः ।

गणितोऽपरविद्यासु शारदेन महात्मना ।
अपरे च महाचार्या वेदवेदाङ्गपारगाः ॥ १७९ ॥

उपवेदानर्थविद्यां कामविद्यामलङ्कृतिम् ।
काव्यं शिल्पं यावनं च दैशिकीं चैव नास्तिकम् ॥ १८० ॥

अवसरोक्तिं च सांख्यं देशधर्मास्तथैव च ।
वेदान्तांश्चेति सर्वं हि ब्रह्मविज्ञानसाधनम् ॥ १८१ ॥

तस्यामपरविद्यायां गणयन्ति विशेषतः ।
तस्मादपरविद्या च द्वात्रिंशत्संख्ययोदिता ॥ १८२ ॥

वस्तुतस्तु न विद्यानां संख्या च नियता भवेत् ।
यथाधिकारं संख्या हि दिङ्मात्रमिह दर्शिता ॥ १८३ ॥

शास्त्राणां चैव ये भेदाः पूर्वमुक्ता महर्षयः ।
विद्यानां चाऽपि ते भेदा भवन्तीति च निर्णयः ॥ १८४ ॥

इदमत्र हि विज्ञेयं रहस्यं मुनिपुङ्गवाः ।
पुरा भगवता प्रोक्तं टङ्काचार्येण योगिना ॥ १८५ ॥

ब्रह्म शक्तिस्वरूपं हि त्रिविधं परिदृश्यते ।
प्रथमं ब्रह्मरूपं तु जगदेवेति बुध्यताम् ॥ १८६ ॥

जगत्कारणरूपं तु द्वितीयं स्यादितीर्यते ।
ब्रह्म शुद्धस्वरूपं हि तृतीयमिति बुध्यते ॥ १८७ ॥

प्रथमं ब्रह्मणो रूपं सगुणं चेति निर्णयः ।
अधिकृत्य हि तद्ब्रह्म वक्तव्यार्थान्विशेषतः ॥ १८८ ॥

विद्याऽपराऽधिकारिभ्यो व्याख्यात्येवेति निश्चयः ।
अपरया विद्ययैव संस्कृता ह्यधिकारिणः ॥ १८९ ॥

स्वेष्टां चैव परप्राप्तिं पुनरावृत्तिदूषिताम् ।
वाञ्छन्ति मूढधिषणा नान्यदस्तीति वादिनः ॥ १९० ॥

यतः प्रकृतिदृष्ट्या हि सुखदुःखात्मकं पुनः ।
तं प्रवृत्तिपरं चैव धर्मं वै ह्यधिकारिणः ॥ १९१ ॥

शास्ति सा चाऽपरा विद्या यथाभेदं यथाक्रमम् ।
ततश्च साऽपरा विद्या त्यज्यते ज्ञानिभिः स्वयम् ॥ १९२ ॥

द्वितीयं ब्रह्मणो रूपं निर्गुणं स्यादितीर्यते ।
अधिकृत्य हि तद्ब्रह्म वेद्यमर्थं विशेषतः ॥ १९३ ॥

सा वक्त्यपरमा विद्या चाधिकारिभ्य एव हि ।
मिथ्यात्वं जगतश्चैव शाश्वतं च प्रमाणतः ॥ १९४ ॥

विद्यया ह्यनया चैव शिक्षिताश्चाधिकारिणः ।
साधनज्ञानविमुखा भ्रमन्त्येवेति निश्चयः ॥ १९५ ॥

व्यष्टिप्रणवरूपा च विद्या याऽपरमा भवेत् ।
सा निवृत्तिपरं धर्मं शास्ति तानधिकारिणः ॥ १९६ ॥

याश्चोपनिषदो विद्यास्ताश्च सर्वा महर्षयः ।
तद्व्यष्टिप्रणवार्थांश्च व्याख्यान्तीति हि बुध्यते ॥ १९७ ॥

तृतीयं ब्रह्मणो रूपं शुद्धमित्यवधार्यताम् ।
तच्चाधिकृत्य परमा विद्या वक्तव्यमेव हि ॥ १९८ ॥

अर्थं चोपदिशत्येव सरहस्यं विशेषतः ।
शुद्धदृष्टया तया चैव सर्वं ब्रह्मेति कथ्यते ॥ १९९ ॥

समष्टिप्रणवरूपा या विद्या परमा च सा ।
धर्मं सनातनं शुद्धं शास्ति तानधिकारिणः ॥ २०० ॥

शिक्षिता ह्यनया चैव शुद्धास्ते ह्यधिकारिणः ।
सर्वमावश्यकं चैव सर्वं ब्रह्मस्वभावजम् ॥ २०१ ॥

न च मोक्षो नैव बन्धो न चैव हि शुभाऽशुभे ।
इति धीराश्च जानन्ति शुद्धदृष्टया महर्षयः ॥ २०२ ॥

सा योगब्रह्मविद्या च गायत्री च चतुष्पदी ।
समष्टिप्रणवार्थं च व्याख्यात्येवेति निश्चयः ॥ २०३ ॥

ब्रह्मसंसारधर्मं च सामान्यं परसाधनम् ।
सा च ह्यावेदयत्येव सर्वांश्चैवाधिकारिणः ॥ २०४ ॥

एवं महावाक्यविद्या समष्टिप्रणवं पुनः ।
व्याख्याति शुद्धदृष्टयैव नानारूपा महर्षयः ॥ २०५ ॥

ब्रह्मसंसारधर्मं च विशेषं शुद्धलक्षणम् ।
व्याख्याति च महावाक्यं चेति ज्ञेयं मनीषिभिः ॥ २०६ ॥

तस्मादेव महावाक्यं गायत्री योगलक्षणा ।
विद्यायां परमायां च शोभते चेति निर्णयः ॥ २०७ ॥

एवमुक्तं च सर्वं हि तदध्यात्मनिरीक्षणात् ।
विज्ञानिभिर्विशेषेण यथाधर्मं हि बुध्यताम् ॥ २०८ ॥

इति विद्यास्वरूपं हि यथावदुपपादितम्।
तस्माद्विद्या च विज्ञेया महर्षिभिरिहादरात्॥ २०९॥

मुनयः—

भगवन्सर्वशास्त्रज्ञ हंसयोगिन्महागुरो।
किं तदुक्तं महावाक्यं विद्यायां गणितं प्रभो॥ २१०॥

लक्षणं च महावाक्यविद्यायाः किं च वै भवेत्।
सरहस्यं च कृपया यथावद्वक्तुमर्हति॥ २११॥

हंसयोगी—

महावाक्याख्यविद्यायाः स्वरूपं हि महर्षयः।
अवश्यमेव वेद्यं स्यात्परप्रेप्सुमुमुक्षुभिः॥ २१२॥

तेषां परमहंसानां शुद्धानां ब्रह्मवादिनाम्।
महावाक्याख्यविद्यायामधिकारो हि कथ्यते॥ २१३॥

पुरा भगवता चैव नारदेन महात्मना।
महावाक्यस्वरूपं च तदित्थमभिवर्णितम्॥ २१४॥

सर्वातीतं परं ब्रह्म सिद्धं प्रणवमण्डले।
तत्रात्माऽनात्मरूपं तु त्रिकोणे मण्डले भवेत्॥ २१५॥

योगिध्येये च तत्रैवं वर्ण्यते शुद्धयोगिभिः।
बिन्दुगर्भे त्रिकोणे च ब्रह्मयच्चाऽपरं हि तत्॥ २१६॥

स्थितं मूर्ध्नि त्रिकोणस्य स्याद्मायाबीजविग्रहम्।
दक्षिणे चैव त्रिकोणस्य पादे त्वात्मा सनातनः॥ २१७॥

सबीजश्च तथा वामे पादे स्यात्प्रकृतिर्मता ।
एवं कोणत्रयं चैव तत्त्वत्रयमुदीर्यते ॥ २१८ ॥

तत्त्वत्रयं त्रिकोणं तु भक्ता हि समुपासते ।
बीजविद्याप्रभावेन सिद्धमन्त्रेण च स्वतः ॥ २१९ ॥

गुणत्रयं त्रिकोणे च परिकल्प्य यथामति ।
व्यासाः पौराणिकाश्चैव ब्रह्म वै समुपासते ॥ २२० ॥

कोणत्रयस्य तद्ब्रह्मस्वरूपस्य विशेषतः ।
परस्परं तु योगं च तुरीये परिकल्प्य हि ॥ २२१ ॥

कर्तारश्चेतिहासानां व्यासाः शुद्धाश्च योगिनः ।
सनातनं सर्वमूलं तद्ब्रह्म समुपासते ॥ २२२ ॥

तत्परप्रेप्सवश्चैव ज्ञानिनो धर्मवत्सलाः ।
तत्त्वजिज्ञासवस्तस्य संसारस्य मुमुक्षवः ॥ २२३ ॥

गायत्रीविद्यया देव्या प्रणवोद्भिन्नरूपया ।
त्रिकोणं तच्च षट्कोणं भूपुरद्वयसंयुतम् ॥ २२४ ॥

परिकल्प्य यथामेधं पादधर्मानुरूपिणम् ।
ब्रह्मकैवल्यसिध्यर्थं स्वात्मानं समुपासते ॥ २२५ ॥

गायत्र्याः प्रथमौ पादौ भूद्वयं चेति कथ्यते ।
अपरौ चरणौ द्वौ च पुरद्वयमुदाहृतम् ॥ २२६ ॥

एवं सङ्कल्पिते चक्रे गायत्रीविद्ययोदिते ।
संसाराख्ये च तत्त्वानि वेद्यान्येवं मुमुक्षुभिः ॥ २२७ ॥

तत्त्वानामष्टकं चैव चतुर्विंशतिसंख्यया ।
कथ्यते तत्र तत्त्वं तु विकृतिर्गुणकर्मणोः ॥ २२८ ॥

शुद्धं सत्त्वं रजश्चैव तमश्चेति गुणा मताः ।
चत्वारस्तैश्च संसारनिर्णयः परिकथ्यते ॥ २२९ ॥

ततः संसारविज्ञानं गायत्र्या बोधितं भवेत् ।
सनातनश्च धर्मश्च ततोऽध्येया च सोच्यते ॥ २३० ॥

योगिनो ब्रह्मनिष्ठाश्च महावाक्यविशारदाः ।
अश्वत्थतत्त्ववेत्तारः समुपास्य परं प्रभुम् ॥ २३१ ॥

षट्कोणवेदपादं च यच्चक्रं ज्ञानिभिः स्तुतम् ।
एकाङ्कग्रहणेनैव त्रिमुखं परिकल्प्य तत् ॥ २३२ ॥

यस्मिन्नूर्ध्वमूले च त्रितयं सचराचरम् ।
अपरं च जगत्सर्वं पश्यन्ति ब्रह्मणि स्वयम् ॥ २३३ ॥

शाखाभूतं जगत्सर्वं मूलं ब्रह्म सनातनम् ।
नित्यसंसारवृक्षस्य धर्माऽधर्मफलस्य हि ॥ २३४ ॥

विशिष्यते च सर्वत्र यच्च तद्ब्रह्म शाश्वतम् ।
विशेषमिति विज्ञेयं तस्य धर्मश्च यो भवेत् ॥ २३५ ॥

तस्य सर्वस्य विज्ञानं महावाक्येन जायते ।
तन्महावाक्यविद्याश्च प्रोक्ताः सन्ति सहस्रशः ॥ २३६ ॥

संसारिणां योगिनां च प्रत्येकं च स्वधर्मतः ।
सर्वमूलस्य सर्वस्य ब्रह्मणः परमात्मनः ॥ २३७ ॥

विज्ञानं साधनं दिव्यं परप्राप्तेर्महात्मनाम् ।
तस्मादेव महावाक्यं योगिभिश्चैव लभ्यते ॥ २३८ ॥

आत्मप्रकारविज्ञानं ज्ञानं सांसारिकं च तत् ।
महावाक्याच्च गायत्र्या जायते च यथाक्रमम् ॥ २३९ ॥

योगदण्डं महावाक्यं स्वात्मसाम्राज्यलक्षणम् ।
योगिभिर्धार्यते तच्च समभावकरं परम् ॥ २४० ॥

ओमित्येकाक्षरं वाक्यं महावाक्यं परं भवेत् ।
तस्मादेव हि जायन्ते महावाक्यानि सर्वशः ॥ २४१ ॥

महावाक्याख्यविद्यायाः सन्ति ये वाऽधिकारिणः ।
तेभ्यः समुपदेष्टव्या शिक्षा या योगलक्षणा ॥ २४२ ॥

सैव श्रीवासुदेवेन शिक्षाऽध्याये निरूपिता ।
चतुर्विंशतिभिश्चैव श्लोकानां हि महर्षयः ॥ २४३ ॥

ये वा योगब्रह्मविद्यानिरता ह्यधिकारिणः ।
तेभ्य एव हि सा शिक्षा विहिता स्यान्महात्मना ॥ २४४ ॥

न केवलं ज्ञानिनां च भक्तानां कर्मिणां तथा ।
विहिता सा च शिक्षा स्यादिति नारदभाषितम् ॥ २४५ ॥

सा योगब्रह्मविद्या हि त्रिमुखी चैव राजते ।
ज्ञानं भक्तिस्तथा कर्म मुखानि स्युर्महर्षयः ॥ २४६ ॥

तदेषां योगमूलत्वं यया चैव हि बुध्यते ।
सा योगब्रह्मविद्या स्यान्महावाक्यं च सा भवेत् ॥ २४७ ॥

अन्वयेन हि गायत्र्या चतुष्पद्या सह स्वयम् ।
युक्तं यदा महावाक्यं भवेदेव तदैव हि ॥ २४८ ॥
सार्थं संपूर्णभावं च तन्महावाक्यमुच्यते ।
तच्च संपूर्णभावं हि समत्वं शास्ति योगतः ॥ २४९ ॥
अर्थानां चैव सर्वेषां स्वरूपाच्च स्वभावतः ।
नानात्वं च जगद्दृष्ट्या यच्च वै परिभाव्यते ॥ २५० ॥
तस्यैकत्वं ब्रह्मदृष्ट्या येन वै संप्रकथ्यते ।
तद्भवेच्च महावाक्यं चेत्याह [१] भगवान्गुरुः ॥ २५१ ॥
तस्मिन्परे ब्रह्मणि च जगद्दृष्ट्या महर्षयः ।
सन्दृश्यन्ते प्रकाराश्च यावन्तस्तत्त्वलक्षणाः ॥ २५२ ॥
तेषां स्वरूपविज्ञानं गायत्र्याश्चैव जायते ।
योगविद्येति तामाहुर्योगब्रह्मविदो जनाः ॥ २५३ ॥
आत्मा च परमात्मा च प्रकृतिश्चेति च त्रयः ।
प्रकारत्वेन राजन्ते तस्मिन्ब्रह्मणि योगिनः ॥ २५४ ॥
तस्मादेव महावाक्यं गायत्री च चतुष्पदा ।
विद्या स्यात्परमा चेति प्रोक्तं स्याद्गुणयोगिभिः ॥ २५५ ॥
सदृष्टान्तं महावाक्यं गायत्र्या सह सङ्गतम् ।
इत्थं व्याख्याति धर्मात्मा [२] भगवान्शंकरः पुरा ॥ २५६ ॥

---

१. गुरुरिति—गुरुश्चात्र भगवान्सनत्कुमार इत्यर्थः । २. शङ्कर इति—दक्षिणामूर्तिः इत्यर्थः ।

तद्गायत्रीस्वरूपत्वं मन्त्राणामस्ति सर्वथा ।
महावाक्यस्वरूपत्वं बीजानां परिकथ्यते ॥ २५७ ॥

या हि सर्वेषु शब्देषु जीवभूता विभाव्यते ।
सा महावागिति ज्ञेयं शब्दतत्त्वविशारदैः ॥ २५८ ॥

एकस्मिन्नेव बीजे तु षट्कर्माणि विभान्ति हि ।
फलवन्ति च तत्कर्मबीजं बीजेन रक्ष्यते ॥ २५९ ॥

ओं तत्सदिति निर्देशो दृश्यते ब्रह्मणि स्वयम् ।
एतन्महावाक्यवेत्ता प्राप्नोति परमं पदम् ॥ २६० ॥

इत्येवं हि महावाक्यस्वरूपं वो महर्षयः ।
गायत्र्याश्च यथातत्त्वं व्याख्यातं स्यान्मया पुनः ॥ २६१ ॥

मुनयः—

यथा हि सन्ति विद्याश्च तथा सन्ति कला इति ।
यथाविभागं कथ्यन्ते नीतिज्ञैश्च महर्षिभिः ॥ २६२ ॥

स्वरूपं तत्कलायाश्च यथावद्वक्तुमर्हति ।
नमस्ते दर्शनार्थज्ञ हंसयोगिन्गुरूत्तम ॥ २६३ ॥

हंसयोगी—

कलास्वरूपं वक्ष्यामि वः शृणुध्वं महर्षयः ।
सर्वेषां स्यात्कलाज्ञानं परप्राप्तिसुसाधनम् ॥ २६४ ॥

संसारव्यवसायानां करणैश्च त्रिभिः पुनः ।
समीचीनैश्च युक्तस्य पुरुषस्य विपश्चितः ॥ २६५ ॥

चातुर्यं राजते यस्याः सा कलेति निगद्यते।
चातुर्यमधिकृत्यैव दर्शनं तत्कला भवेत् ॥ २६६ ॥

विनैव हि कलाज्ञानं विद्याज्ञानेन किं भवेत्।
कलया शोभते विद्या शोभते च पुमान्तया ॥ २६७ ॥

यथा विद्यास्तुतं ब्रह्म स्वात्मशक्त्यैव चेशया।
उपास्यते राजते च तथा विद्याश्च तत्त्वतः ॥ २६८ ॥

कलाभिश्चैव राजन्ते ज्ञेयार्थप्रतिपादनात्।
विद्यार्थः स्यात्सुपूर्णश्च कलार्थादेव नाऽन्यथा ॥ २६९ ॥

ब्रह्मात्मार्था परा विद्या जगदर्थाऽपरा च सा।
उभयार्था कला चेति कुशिकाद्यैरिहोच्यते ॥ २७० ॥

यथाज्ञानं यथाकामं चेन्द्रियैरखिलैरपि।
क्रियमाणं च कर्माऽपि कलयैव हि शोभते ॥ २७१ ॥

शास्त्रार्थाश्चैव विद्यार्था राजन्ते कलयैव हि।
सर्वेषां च पदार्थानां कला सा नियता भवेत् ॥ २७२ ॥

विद्याभ्यो न कला भिन्नाः परं तु मुनिपुङ्गवाः।
विद्यायामेव ताः सर्वाश्चान्तर्भूता विभान्ति हि ॥ २७३ ॥

तस्मादेव कलासंख्या न निर्णीता महात्मभिः।
न नामभिश्च निर्दिष्टाः कलाः सर्वा महर्षयः ॥ २७४ ॥

न चैव लक्ष्मनिर्दिष्टाः क्रियाभिस्ताभिरेव च।
कलाया लक्षणं संख्या स्वरूपं चैव जायते ॥ २७५ ॥

कलानां तु चतुः षष्टिः संख्या वै पूर्वसूरिभिः ।
प्रोक्ता बुभुत्सुबोधार्थं चेति शुक्रैरुदीर्यते ॥ २७६ ॥

शास्त्राणां चैव विद्यानां यथा भेदाश्च कीर्तिताः ।
तथा भेदाश्च सर्वेऽपि कलायां संभवन्ति च ॥ २७७ ॥

यथाशास्त्रादिभेदं च कलाभेदोऽपि कथ्यते ।
इत्थं कलास्वरूपं च व्याख्यातं संग्रहेण वः ॥ २७८ ॥

शास्त्राणां चैव विद्यानां कलानां वै महर्षयः ।
सामान्यतश्च संज्ञा हि दर्शनं चेति कथ्यते ॥ २७९ ॥

एवं विद्याकलार्थं च शास्त्रयुक्तं यथामति ।
विज्ञाय च यथाकालं यथादेशं यथाविधि ॥ २८० ॥

दिव्यसंस्कारयुक्ताश्च त्याज्योपादेयनिश्चयाः ।
क्रमेण च परं ब्रह्मसामीप्यं चाऽधिकारिणः ॥ २८१ ॥

सदार्यशिक्षिताश्चैव प्राप्नुवन्ति महर्षयः ।
तस्मात्सदार्यशिक्षा स्याच्छास्त्रविद्यानुगामिनी ॥ २८२ ॥

दर्शनानि च सर्वाणि नानाधर्मपराणि च ।
संस्कर्तॄणि च सर्वेषां देहिनां संभवन्ति हि ॥ २८३ ॥

मुनयः—

हंसयोगिन्नमस्तेऽस्तु भवता धर्मकोविद ।
दर्शनानां च सर्वेषां शास्त्रविद्याकलात्मनाम् ॥ २८४ ॥

स्वरूपं सरहस्यं च यथावदुपपादितम्।
तेषां संस्कारार्थकत्वं दर्शनानां भवेदिति ॥ २८५ ॥

भवता कथितं ह्यद्य कृपया मुनिसत्तम।
एवं संस्कारतत्त्वं च पृच्छामस्त्वां यथामति ॥ २८६ ॥

कोऽयं संस्कारवाच्यः स्यात्कथं सोऽयं निगद्यते।
कः संस्काररहस्यार्थस्तस्य भेदः कियान्भवेत् ॥ २८७ ॥

कथं स नियतश्चास्ति सर्वेषां देहिनां पुनः।
संस्कारदर्शनं किं नु भवेत्तद्दर्शनेषु च ॥ २८८ ॥

संस्काराणां हि कालश्च साधनानि तथैव हि।
अधिकारी च योगीन्द्र कथं नु परिभाव्यते ॥ २८९ ॥

इति सर्वं यथातत्त्वं व्याख्यातुं त्वमिहार्हसि।
तत्संस्कारविचारो हि कार्योऽस्त्यस्माभिरेव च ॥ २९० ॥

हंसयोगी—

शृणुध्वं मुनयः सर्वे धर्मसंरक्षणोत्सुकाः।
तद्वो वक्ष्यामि तत्त्वेन यच्च पृष्टं महर्षिभिः ॥ २९१ ॥

यश्च संस्कारवाच्यः स्यात्पूर्वाचार्याभिवर्णितः।
स च गुह्यतमश्चैव सर्वत्र परिदृश्यते ॥ २९२

भगवदंशभूतानां महर्षीणां महौजसाम्।
यथाकालं यथादेशं प्रियं शुद्धं सनातनम् ॥ २९३ ॥

धर्मं तं शाश्वतं चैव जगदभ्युदयाय हि।
वदतां धर्मसिन्धूनां नानारूपवतां पुनः ॥ २९४ ॥

धर्मनिर्णायकं चैव विशुद्धं हृदयं महत्।
योगदेवीप्रसादेन परिभाव्य मुहुर्मुहुः ॥ २९५ ॥

प्रणम्य परमाचार्यान्कुमारादीन्महर्षयः।
संस्कारस्य स्वरूपं हि यथाप्रज्ञं वदाम्यहम् ॥ २९६ ॥

शृण्वन्तु सावधानं हि योगदेवी प्रसीदतु।
नरनारायणश्चैव धर्मशास्ता प्रसीदतु ॥ २९७ ॥

अशेषमानुषैश्चैव तथान्यैश्च महर्षयः।
परप्राप्तिसाधनानि त्रीणि कर्माणि सन्ति च ॥ २९८ ॥

कर्तव्यानीति सिद्धान्तः कथितः स्यान्महात्मभिः।
अधिकारः कर्म चैव लक्षणं स्यात्परस्परम् ॥ २९९ ॥

ततोऽधिकारलक्षणं भवेत्कर्म तथैव हि।
तत्कर्मलक्षणश्चैव ह्यधिकारो निगद्यते ॥ ३०० ॥

कर्म विद्याभ्यासरूपं प्रथमं स्यात्तथैव हि।
विवाहाख्यं द्वितीयं स्यात्तृतीयं मरणं भवेत् ॥ ३०१ ॥

एतद्वै त्रिविधं कर्म कर्तुं तैरधिकारिभिः।
स्वार्थनेत्री च या शक्तिः सा संपाद्या भवेदिति ॥ ३०२ ॥

कथ्यते दर्शनैः सर्वैः सम्यगुक्तावचैरपि।
तच्छक्तेश्चान्तये चैव यश्च वा हि महर्षयः ॥ ३०३ ॥

क्रियते कार्यते चैव यथाकालं यथाविधि ।
स एव हि भवेच्छ्रीमान्संस्कार इति कथ्यते ॥ १०४ ॥

ज्ञानेन्द्रियाणि सर्वाणि तथा कर्मेन्द्रियाणि च ।
शुद्ध्यन्ते येन सोऽयं स्यात्संस्कार इति शङ्करः ॥ १०५ ॥

सर्वाभ्युदयदश्चैव सर्वदोषापहश्च यः ।
गुणान्तराऽऽधानरूपो बलवीर्यविवर्धनः ॥ १०६ ॥

सोऽयं भवेच्च संस्कारवाच्यः स्यादिति निर्णयः ।
यतः संस्क्रियते सर्वं ततश्चैवं स चोदितः ॥ १०७ ॥

संस्कारेणैव कर्माणि त्रीण्युक्तानि महर्षयः ।
भवन्ति फलवन्त्येव ततः सोऽयं प्रशस्यते ॥ १०८ ॥

यद्यपि त्रीणि कर्माणि यान्युक्तानि यथाक्रमम् ।
देहिनां तानि सर्वाणि सन्ति स्वाभाविकानि च ॥ १०९ ॥

फलवन्ति तथाप्यत्र विज्ञेयं तदिदं भवेत् ।
स्वाभाविकानां तेषां हि फले सत्यपि कर्मणाम् ॥ ११० ॥

फलयोगश्च दुष्टः स्याद्दुराचारेण सर्वथा ।
सति दोषे [1]गुणाश्चाष्टावात्मनः स्युर्न चैव हि ॥ १११ ॥

तस्माद्भवेच्च संस्कारः शोधकश्चेति कथ्यते ।
संस्कारस्य च सर्वस्य रहस्यार्थस्त्वयं भवेत् ॥ ११२ ॥

---

१. गुणा इति—अष्टावात्मगुणाश्च, दया, शान्तिः, अनसूया, शौचम्, अनायासः, मङ्गलम्, अकार्पण्यम्, अस्पृहा, इति प्रसिद्धा भवन्तीत्यर्थः ।

शुद्धात्मशक्तिसंपत्तिर्या च स्यादधिकारिणाम् ।
सा स्यात्प्रयोजनं सर्वसंस्कारस्येति कथ्यते ॥ ३१३॥

अधिकारिशोधकश्च संस्कारस्त्रिविधो मतः ।
प्राकृतश्च तथात्मीयो ब्राह्मश्चेति स चोच्यते ॥ ३१४ ॥

एवं सामान्यतः प्रोक्तास्त्रयो भेदा महर्षयः ।
संस्कारस्य विशेषेण तेऽनन्ताः स्युरितीर्यते ॥ ३१५ ॥

संस्कारत्रयहीनानां सर्वेषां चाधिकारिणाम् ।
दुर्गतेर्दर्शनादेव संस्कारो नियतो भवेत् ॥ ३१६ ॥

प्राकृतं दर्शनं चैव तथा चैवात्मदर्शनम् ।
शुद्धं च दर्शनं चेति भवेत्संस्कारदर्शनम् ॥ ३१७ ॥

अत्रेत्थमवधेयं स्यात्तत्त्वं च मुनिपुङ्गवाः ।
येन प्राकृतदृष्ट्या तु संस्कारो विहितो भवेत् ॥ ३१८ ॥

प्राकृतं दर्शनं तत्स्यात्संस्कारपरमेव हि ।
एवमेवात्मदृष्ट्या तु ब्रह्मदृष्ट्या च यद्भवेत् ॥ ३१९ ॥

तेन तेन तु नाम्ना तद्भवेत्संस्कारदर्शनम् ।
आत्मनो ब्रह्मणश्चैव संस्कारो न भवेद्यतः ॥ ३२० ॥

ततस्तु प्रकृतेरेव तत्तदृष्ट्या महर्षयः ।
संस्कारो विहितश्चेति तस्मादेवं तदुच्यते ॥ ३२१ ॥

यस्मिन्काले च कर्माणि कर्तुं वै ह्यधिकारिणः ।
समर्थाः परिदृश्यन्ते सोऽस्ति संस्कारलक्षणः ॥ ३२१ ॥

तस्मात्संस्कारयोग्यश्च कर्मणां हि महर्षयः ।
नैकरूपश्च कालः स्यात्सर्वेषां चाधिकारिणाम् ॥ ३२३ ॥
इत्याहुः शुद्धसिद्धान्तप्रवणाः पूर्वसूरिणः ।
यथास्वरूपं कालश्च सेव्योऽस्ति ह्यधिकारिभिः ॥ ३२४ ॥
केचिन्मुनिगणा मूढाः संस्कारस्य विशेषतः ।
लोकधर्ममविज्ञाय कालं संनिर्णयन्ति च ॥ ३२५ ॥
तथा वृथा विलापः स्यादुपदेशो महात्मनाम् ।
लोकधर्मविरुद्धत्वान्न स्यात्कालस्य निर्णयः ॥ ३२६ ॥
यथा हि दुर्बलानां च स्त्रीणां पुंसां स्वभावतः ।
संस्कारस्य विशेषेण नियमेन च धर्मतः ॥ ३२७ ॥
विहितः कालनियमो दुष्फलाय हि कल्पते ।
किं च सोऽयं हि नियमो न स्यादेव कलौ युगे ॥ ३२८ ॥
तस्मात्संस्कारकालश्च यथालोकं यथायुगम् ।
शास्त्रार्थवचसा चैव निर्णयो ह्यधिकारिभिः ॥ ३२९ ॥
तथैव हि साधनानि भवन्त्यत्रेति निर्णयः ।
यतः स्थान च दर्भाणां शराः प्रोक्ता महर्षिभिः ॥ ३३० ॥
एवमेव भवेत्तेषां त्रयाणां कर्मणां पुनः ।
कर्ता स्यादधिकारी च श्रद्धया परयाऽन्वितः ॥ ३३१ ॥

महर्षयः—

प्रोक्तानां कर्मणां चैव त्रयाणां मुनिसत्तम ।
यथाक्रमं हि संस्कारा ये च त्रेधा मनीषिभिः ॥ ३३२ ॥

तेषां स्वरूपं साङ्गं च यथविधि वदस्व नः ।
नमस्ते सर्वधर्मज्ञ नमस्ते योगिनां वर ॥ ३३३ ॥

हंसयोगी—

शृणुध्वं मुनयः सर्वे संस्काराणां विशेषतः ।
स्वरूपं संप्रवक्ष्यामि साङ्गं सार्थं च तत्त्वतः ॥ ३३४ ॥

कर्म विद्याभ्यासरूपं यच्च वै गदितं भवेत् ।
तस्योपनयनाख्यश्च संस्कारो विहितो भवेत् ॥ ३३५ ॥

संस्काराणां च सर्वेषां प्रथमोऽयं निगद्यते ।
प्रथमो यश्च संस्कारः स स्यात्त्र्यङ्ग इतीर्यते ॥ ३३६ ॥

गर्भाधानं च जननं चान्नप्राशनमित्यपि ।
त्रीणि चाङ्गानि कथ्यन्ते संस्कारप्रथमस्य च ॥ ३३७ ॥

प्रथमो यश्च संस्कारस्तस्याङ्गानां च सर्वशः ।
पितरौ चैव कर्तारौ भवेतां हि महर्षयः ॥ ३३८ ॥

तस्योपनयनाख्यस्य संस्कारस्य भवन्ति च ।
अङ्गानि यानि तेषां हि स्वरूपं चेत्थमुच्यते ॥ ३३९ ॥

गर्भाधानाख्यमङ्गं हि तत्रैवं चोपपादितम् ।
यथार्थसमयं चैव यथालोकव्यवस्थिति ॥ ३४० ॥

सर्वेषां देहिनां चैव व्यवसायस्य साधनम् ।
[1]अजाऽऽदानं च यत्कर्म गर्भाधानं तदुच्यते ॥ ३४१ ॥

---

१. अजाऽऽदानमिति—प्रकृतेः स्वीकार इत्यर्थः ।

तत्कर्मानुगतश्चैव संस्कारो यश्च दृश्यते।
तस्य गर्भाधानमिति दर्शनैर्नाम कथ्यते ॥ ३४२ ॥
गर्भाधानादिकं कर्म यथा च पशुपक्षिषु।
स्वाभाविकं दृश्यते च सफलं यत्तथैव हि ॥ ३४३ ॥
सर्वेषु च मनुष्येषु तच्च यद्यपि दृश्यते।
तथाऽपि कर्मणस्तस्य फलं दुष्टं भवेत्ततः ॥ ३४४ ॥
गर्भाधानेन दोषश्च १बैजिको २गार्भिकश्च यः।
क्षीयते चेति सिद्धान्तो महर्षिभिरिहादृतः ॥ ३४५ ॥
देहिनां चैव सर्वेषां गर्भस्य च यदा पुनः।
उपक्रमोपसंहारौ समौ स्यातां तदैव हि ॥ ३४६ ॥
गर्भाविष्टात्परस्माच्च पुरुषात्सा महीयसी।
योगशक्तिः समुद्भिन्ना नानारूपा प्रकाशते ॥ ३४७ ॥
तस्याश्च शक्तयस्तिस्रो व्यवसायस्य नायिकाः।
आत्मनश्च भवन्तीति नारदाद्यैरिहोच्यते ॥ ३४८ ॥
ततोऽधिकारिणो ये च शुद्धगर्भा महर्षयः।
तेषां शुद्धा परप्राप्तिः पुनरावृत्तिवर्जिता ॥ ३४९ ॥
तत्तल्लक्षणसंयुक्ता तत्तद्धर्मोपशोभिता।
संसारनियता चैव यथाकामं यथाक्रमम् ॥ ३५० ॥
भवेदिति हि सिद्धान्तस्तत्त्वविद्भिर्निगद्यते।
तस्मादेव हि गर्भाणां शुद्धिश्च विहिता भवेत् ॥ ३५१ ॥

---

१. बैजिक इति—शुक्रज इत्यर्थः. २. गार्भिक इति—मातृगर्भवासज इत्यर्थः।

समभावोदयश्चैव शुद्धया चैव तया भवेत्।
गर्भाधानं विशुद्धं च संस्कारादेव जायते ॥ ३५२ ॥

यथाकालं हि सर्वेषां देहिनां च यथामति।
एवं विशुद्धगर्भाच्च समभावोदयो भवेत्॥ ३५३ ॥

आत्मभावपरिज्ञानं समभाव इतीर्यते।
सर्वैरेव हि शुद्धार्थैर्नारदाद्यैर्महर्षिभिः ॥ ३५४ ॥

सेयं शुद्धिश्च कल्याणी यथाप्रकृतिमण्डलम्।
सर्वेषां [1]व्यवसायानां [2]कारणं स्यादितीर्यते ॥ ३५५ ॥

तस्य च [3]प्रथमस्याऽपि संस्कारस्य यथास्थिति।
[4]करणं सा च शुद्धिः स्यादिति शुद्धिर्निगद्यते ॥ ३५६ ॥

तस्मात्समात्मविज्ञानादात्मशक्तिर्गरीयसी।
त्रित्वैकत्वस्वरूपा च जायते देहसंश्रया ॥ ३५७ ॥

तस्याश्चैव हि संसारव्यवसाया महर्षयः।
संभवन्ति यथाकालं यथालोकं यथास्थिति ॥ ३५८ ॥

तस्माद्गार्भश्च संस्कारो विहितो गर्भशुद्धये।
सर्वैश्च दर्शनैरेव भवेत्स प्रथमः स्मृतः ॥ ३५९ ॥

---

१. व्यवसायानामिति—ज्ञानं, इच्छा, क्रिया, इति प्रसिद्धा इत्यर्थः—
२. कारणमिति—साधारणकारणमित्यर्थः। ३. प्रथमस्येति—उपनयनाद्यस्ये-त्यर्थः। ४. करणमिति—असाधारणकारणमित्यर्थः ॥

संस्कारश्च च गार्भस्य त्रैविध्यं चैवमुच्यते ।
दैवं चार्षं मानुषं च स्यादिति प्रेष्ठसूरिभिः ॥ ३६० ॥

एतच्चैव यथाकालं यथादेशं विधीयते ।
तत्राद्ये द्वे च ये ते च भवेतां लोकशर्मणे ॥ ३६१ ॥

सङ्कल्पाल्लोकनाथस्य भवेतां विहिते च ते ।
इति शुद्धार्यसिद्धान्तो विज्ञेयः स्यान्मनीषिभिः ॥ ३६२ ॥

गर्भाधानप्रकाराणां त्रयाणां वै महर्षयः ।
१विजातीयात्प्रयोगाच्च भेदोऽनन्तश्च दृश्यते ॥ ३६३ ॥

नारसिंहश्च गर्भस्तु दैवसंस्कारलक्षणः ।
कर्णाद्याः पाण्डवा ये च तथा चैवं त्रिधाः परे ॥ ३६४ ॥

दैवार्षमानुषं तेषां गर्भाधानमितीर्यते ।
रामाद्या ह्यवताराश्च तथा चैवं त्रिधाः परे ॥ ३६५ ॥

दैवमानुषगर्भाः स्युरिति ज्ञेयं मनीषिभिः ।
कृष्णद्वैपायनाद्याश्च मुनयो भिन्नयोनयः ॥ ३६६ ॥

आर्षमानुषगर्भाः स्युरिति ज्ञेयं मनीषिभिः ।
भार्गवो वामनश्चैव कपिलो भगवांस्तथा ॥ ३६७ ॥

---

१. प्रयोगाच्चेति. प्रयोगश्चात्र परस्परसंबन्धः । तथा च, दैवं आर्षम्, मानुषम्, दैवार्षमानुषम्, आर्षमानुषम्, दैवमानुषम्, दैवार्षम्, इत्यादि-गर्भाधानभेदो विज्ञेय इत्यर्थः ॥

तथा चैवं विधाश्चान्ये ते सर्वे च महर्षयः ।
दैवार्षगर्भाः सन्ति ते विज्ञेयं धर्मकोविदैः ॥ ३६८ ॥

एवमार्षं मानुषं च गर्भाधानं हि केवलम् ।
भवेदिति च सिद्धान्तः शुद्धाचार्यानुसम्मतः ॥ ३६९ ॥

एवं सीता रुक्मणी च द्रौपदी [1]कन्यकास्तथा ।
इति याः सन्ति तासां हि गर्भो ज्ञेयो मनीषिभिः ॥ ३७० ॥

इति गर्भाधानविधौ प्रकाराश्चैव योगिनः ।
दिङ्मात्रमिह संप्रोक्ताश्चान्यत्सर्वं यथामति ॥ ३७१ ॥

भवेच्छुद्धरहस्ये हि विज्ञेयं चाऽधिकारिभिः ।
अतः प्रथमसंस्कारे करणं तच्च जायते ॥ ३७२ ॥

तस्माच्च दुष्टगर्भानां मानुषाणां महर्षयः ।
सोऽयं प्रथमसंस्कारो दुष्टश्च विफलो भवेत् ॥ ३७३ ॥

यथागर्भस्वभावं हि विधाया ग्रहणं भवेत् ।
एवमन्ये च संस्कारा भवेयुः शुद्धगर्भगाः ॥ ३७४ ॥

अतश्च शुद्धगर्भानां मानुषाणां तदुच्यते ।
महत्वं च यथाकालं तैस्तैश्चैव हि दर्शनैः ॥ ३७५ ॥

इत्थं भगवता पूर्वं नारायणमहर्षिणा ।
प्रथमसंस्काराङ्गस्य गर्भाधानस्य योगिनः ॥ ३७६ ॥

---

१ अत्र कन्यकाशब्देन—ब्राह्मी, माहेश्वरी, कौमारी, वैष्णवी, वाराही, माहेन्द्री, चामुण्डा, इति विदिताः सप्त मातरः कथ्यन्ते ।

व्याख्यातोऽस्ति रहस्यार्थो नारदाय महात्मने।
तमद्य संप्रवक्ष्यामि संग्रहेण महर्षयः ॥ ३७७ ॥

गर्भधानाख्यसंस्कारो यश्च स्याद्विधिचोदितः।
तेन स्थानाऽर्थकर्तारः शुद्ध्यन्ते परमार्थतः ॥ ३७८ ॥

प्राजापत्यं हविर्यत्र हूयते मन्त्रपूर्वकम्।
यथाकालं विशुद्धेन भावेन गृहमेधिभिः ॥ ३७९ ॥

लोकमाता परा शक्तिर्देवी चन्द्रकलावती।
यत्र स्थित्वा हविस्तच्च गृण्हाति स्वेन तेजसा ॥ ३८० ॥

तच्च स्थानं हि गर्भाख्यं भवेदिति निगद्यते।
गृहमेधेन शुद्धेन तृप्ताः स्युः पितरः स्वयम् ॥ ३८१ ॥

शुक्रार्तवसमायोगाद्यच्छुद्धाऽशुद्धलक्षणात्।
आत्मभोगायतनं च परमातत्त्वशोभितम् ॥ ३८२ ॥

कायबीजं च गर्भाख्यं चाऽर्थवाच्यं तदुच्यते।
अर्थानां कारणत्वेन तदर्थ इति कथ्यते ॥ ३८३ ॥

शुक्रार्तवसमायोगो विशुद्धश्च यदा भवेत्।
तदा यश्चाऽमलोऽनन्तो जीवः क्षेत्रज्ञसंज्ञकः ॥ ३८४ ॥

तं योगं चार्थवाच्यं हि क्षेत्ररूपं विशेषतः।
व्यवसायाधिकरणं प्रावेशेदीश्वरेच्छया ॥ ३८५ ॥

सोऽयं कर्ता गर्भवाच्यो भवेदिति निगद्यते।
इत्युक्तानां त्रयाणां च गर्भाणां मन्त्रपूर्वकम् ॥ ३८६ ॥

विहिता येन शुद्धिः स्याद्यथाकालं विशेषतः।
तदिदं हि भवेद्गर्भाधानं संस्कारलक्षणम्॥ ३८७॥

सोऽयं यद्यपि शुद्धः स्याज्जीवाऽऽत्मा च सतातनः।
तथाऽपि क्षेत्रदृष्ट्या हि तस्य शुद्धिर्विधीयते॥ ३८८॥

देहिनः साम्यविज्ञानज्ञापनायैव चात्मनः।
शुद्धिः सा विहिता चेति मया दृष्टं पुरा पुनः॥ ३८९॥

वस्तुतस्तु भवेच्छुद्धिस्त्रिविधा पुण्यलक्षणा।
एवं शुद्धेः प्रकाराश्च विज्ञेयाः स्युर्मनीषिभिः॥ ३९०॥

ज्ञानं मनश्चेन्द्रियाणि दृश्यन्ते क्षेत्रमण्डले।
आत्मयोगेन तस्माद्धि त्रिविधं क्षेत्रमुच्यते॥ ३९१॥

तत्र या स्याज्ज्ञानशुद्धिः कर्तृशुद्धिश्च सा भवेत्।
अर्थशुद्धिश्च या प्रोक्ता सा मनश्शुद्धिरुच्यते॥ ३९२॥

या च स्थानपरा शुद्धिः सेन्द्रियार्थेति बुध्यते।
इति शुद्धित्रयाणां हि स्वरूपमभिवर्णितम्॥ ३९३॥

शुद्ध्यर्थकाश्च संस्कारा ये च स्युर्दर्शनोदिताः।
ते च सर्वे यथाकालं यथालोकं चरन्ति च॥ ३९४॥

इति तस्माच्च संस्कारा विहिताः कल्पदर्शनात्।
अधिकारिभिश्च ते हि कार्या इति निगद्यते॥ ३९५॥

ये च स्खलितवीर्याश्च दुराचारान्महर्षयः।
न ते हि गर्भाधाने च भवेयुरधिकारिणः॥ ३९६॥

साधारणोऽयं नियमः स्त्रीपुंसोरस्ति सर्वथा ।
यतः स्याद्गृहमेधश्च स्त्रीपुंभ्यां च कृतः स्वयम् ॥ ३९७ ॥
गर्भाधानस्य कालश्च स्थानशुद्ध्यर्थकस्य हि ।
ऐच्छिकः स्यादिति ज्ञेयं शुद्धैर्दासाऽधिकारिभिः ॥ ३९८ ॥
अर्थशुध्यर्थकस्याऽपि कालः स्यादैच्छिको मतः ।
कर्तृशुद्ध्यर्थकस्य तु संस्कारस्य महर्षिभिः ॥ ३९९ ॥
विहितः कालनियमो भवेदिति निगद्यते ।
परं तु कालः सेव्यः स्यात्सर्वत्र शुभलक्षणः ॥ ४०० ॥
दुर्गायाः समयान्ते च दंपती धर्ममानसौ ।
स्नातौ स्वलङ्कृतौ चैव सद्वस्त्राऽभरणादिभिः ॥ ४०१ ॥
सुलग्ने सुमुहूर्ते च काले वृद्धाऽनुमोदिते ।
सद्गुरोऽनुज्ञां गृहीत्वा हि सप्रणामं विशेषतः ॥ ४०२ ॥
प्रीत्याऽनुत्तमया चैव श्रद्धया च यथाविधि ।
गर्भाधानं च कुरुतां यथाशुद्धार्थदर्शनम् ॥ ४०३ ॥
अथोपविश्य माङ्गल्ये चासने दंपती ततः ।
अन्योऽन्यं वदतां धर्मं तत्र पत्न्यैवमुच्यताम् ॥ ४०४ ॥
"भर्तस्त्वां १तपसो जातं २दर्शनज्ञं विशेषतः ।
३तपोविभूतिमन्तं च जानन्तं ह्यस्मदीप्सितम् ॥ ४०५ ॥

१. तपसोजातमिति—तपसः गर्भाधानादेरुपनयनपर्यन्ताच्च कर्मणः, जातम्—द्विजत्वेन जातम् , इत्यर्थः । २. दर्शनज्ञमिति—प्रज्ञाकामैश्च यानि दर्शनानि वेद्यानि, तेषां वेत्तारम् इत्यर्थः । ३. तपोविभूतिमन्तमिति—गुरुभक्तिमात्रसंजाताऽखिलदर्शनविज्ञानैश्वर्यसंपन्नम् , इत्यर्थः ।

अहं वै संप्रजानामि सुस्निग्धेनैव चेतसा।
पुत्रकाम महाराज जायस्व १ प्रजया प्रभो ॥ ४०६ ॥

इत्येवमुक्त्वा धर्मज्ञा पत्नी च प्रणमेत्पतिम्।
अथैवं हि वदेद्भर्ता पत्नीं २ सद्धर्मचारिणीम् ॥ ४०७ ॥

"पुत्रकामे प्रिये पत्नि धर्म्यं गर्भं च मत्पुनः।
याचमानां हि भवतीं जानामि स्निग्धचेतसा ॥ ४०८ ॥

यथार्थं भज सुप्रीतवदने ३धर्मलोलुपे।
मां पतिं धर्मकामं च कामं फलतु ते परम्" ॥ ४०९ ॥ ॥

इत्यथाऽप उपस्पृश्य ह्याचम्य च पुमान्स्वयम्।
तथा पवित्रपाणिश्च प्राणायामं समाचरेत् ॥ ४१० ॥

ततः साङ्गं च सङ्कल्पं सात्विकत्यागपूर्वकम्।
कृत्वा विघ्नेशपूजां वै यथाविधि समाचरेत् ॥ ४११ ॥

पुनश्च प्राणानायम्य संकल्प्य च यथाफलम्।
फलदानं यथाधर्मं बन्धुभ्यश्च समाचरेत् ॥ ४१२ ॥

१. प्रजयेति-यच्च हि प्रजाया जन्म, तच्च जनयितुरेव भवति जन्म। तथा च, हे पुत्रकाम स्वरूपेण जायस्व, इति भावः। तस्मादेव "आत्मा वै पुत्रनामाऽसि" अङ्गादङ्गात्सम्भवसि, इत्यादि श्रुतिः संगच्छते। २. सद्धर्मचारिणीमिति-सष्ठ्यनुरूपधर्मचारिणीमित्यर्थः। ३. धर्मलोलुपे इति—धर्मश्चात्र पुत्रप्राप्तिरूपः, तथा च पुत्रकामे, इत्यर्थः।

पुरुषेषु महाविष्णुं स्त्रीषु लक्ष्मीं च देवताम् ।
आवाह्य मन्त्रपूर्वं हि साङ्गां पूजां विधाय हि ॥ ४१३ ॥

तेभ्यश्चैव सतांबूलं सयक्षद्रव्यदक्षिणम् ।
फलं दद्यान्निषिक्तं च मन्त्रतीर्थेन वै ततः ॥ ४१४ ॥

दंपती प्रणमेतां तान्बन्धूंश्च भक्तिपूर्वकम् ।
अथ सर्वान्समामन्त्र्य दंपती प्रीतमानसौ ॥ ४१५ ॥

एकस्मिन्नेव पात्रे च चरेतां भोजनं शुभम् ।
कन्याभिर्बालकैश्चैव साकं तद्भोजनं वरम् ॥ ४१६ ॥

कन्यादीनां भोजनार्थं पृथक्पात्रं प्रकल्पयेत् ।
न तत्र भोजने चाऽत्र सर्वेषां हि प्रशस्यते ॥ ४१७ ॥

ततः प्रक्षाल्य विधिवत्पाणिपादं च दंपती ।
कन्यादिभ्यो भोजनान्ते चन्दनं पुष्पमालिकाः ॥ ४१८ ॥

तांबूलं दक्षिणां चैव ददतां प्रीतिपूर्वकम् ।
वस्त्रदानं च गोदानं श्रीमतां हि प्रशस्यते ॥ ४१९ ॥

अथ शय्यागृहं रम्यं गन्धधूपसुवासितम् ।
सुखशय्यासनाढ्यं च दीपैर्मङ्गलकैर्युतम् ॥ ४२० ॥

पुष्पचन्दनतांबूलरम्यपात्रोपशोभितम् ।
विशालविमलादर्शचित्रबिंबादिभूषितम् ॥ ४२१ ॥

पथ्यैश्च विविधैर्भक्ष्यैः फलैश्च रतिवर्धकैः ।
यथास्थानं च निहितैस्तथान्यैर्भोगसाधनैः ॥ ४२२ ॥

एलावलङ्गखर्जूरशर्कराकुंकुमैः पुनः।
संश्लिष्टेन सुतप्तेन क्षीरेण च यथासुखम् ॥ ४२३ ॥

पूर्णेन रम्यकुंभेन सतीर्थैः कलशैरपि।
सहितं च यथाधर्मं प्रविशेतां हि दंपती ॥ ४२४ ॥

अथ शय्यामधिष्ठाय प्राङ्मुखौ तौ च दंपती।
बद्धाञ्जलिपुटौ चैव प्रार्थयेतां यथामति ॥ ४२५ ॥

"ब्रह्मा सरस्वतीभर्ता महाविष्णुः श्रियः पतिः।
उमापतिः शिवश्चैव पान्त्वावां शरणागतौ ॥ ४२६ ॥

ईश्वरी चावयोरात्मशक्तिर्देवी महीयसी।
धर्मेण पुत्रकामौ च पात्वावां शरणागतौ" ४२७ ॥

इति संप्रार्थ्य मनसा प्रणमेतां यथासुखम्।
अथ तत्र पुमान्वामे चाङ्के ह्यारोप्य सुन्दरीम् ॥ ४२८ ॥

आलिङ्ग्य वामहस्तेन मूर्ध्न्युपाघ्राय तां मुदा।
प्राणायामं च विधिवत्कुर्याद्भक्तिसमन्वितः ॥ ४२९ ॥

ततः साङ्गं च सङ्कल्पं सात्विकत्यागपूर्वकम्।
सफलं चैव कृत्वाऽथ सर्वाण्यङ्गानि च स्त्रियः ॥ ४३० ॥

परामृशंश्च हस्तेन दक्षिणेन पुमान्स्वयम्।
ओं ह्रीं श्रीं नम इत्येव मनुना च ततः पुनः ॥ ४३१ ॥

सीमन्तमूर्ध्नि पत्न्यास्तु शुक्लपुष्पाक्षताश्रिते।
शुभं दक्षिणहस्ताग्रं निधाय हि समाहितः ॥ ४३२ ॥

ओं ह्रीं प्रजानां प्रजनाः सुवीराः
सुवर्चसः शक्तिरताश्च देवाः ।
हार्देश्वरांशाः कमनीयवाचो
महाप्रभावा महनीयरूपाः ॥ ४३३ ॥

पञ्चात्मकं पञ्चसु वर्तमानं
षडाश्रयं षड्गुणयोगयुक्तम् ।
तं सप्तधातुं त्रिमलं द्वियोनिं
चतुर्विधाऽऽहारमयं शरीरम् ॥ ४३४ ॥

तद्धर्मरूपं परमात्मगेहं
प्रकल्पयन्तु स्वपराऽऽद्यशक्त्या ।
सिञ्चन्तु तेजः परिधारयन्तु
गुणैश्च पुष्णन्तु तदावसन्त्विह ॥ ४३५ ॥

इति मन्त्रं समुच्चार्य प्रजाकामो वधूं शिवाम् ।
अभिमन्त्रयेच्छुद्धेन भावेन च समन्वितः ॥ ४३६ ॥

मन्त्रसंस्कारकाले च पत्नी बद्धाञ्जलिः स्वयम् ।
चिन्तयेच्चेतसि वरं भर्तारं देवरूपिणम् ॥ ४३७ ॥

ओं क्लीं श्रीं ह्रीं नम इति मन्त्रं पत्नी जपेत्तदा ।
कलामिताभिः संख्याभिश्चेतसाऽनन्यगामिना ॥ ४३८ ॥

ततश्चाऽप उपस्पृश्य दंपती धर्ममानसौ ।
गृहमेधं यथारूपं चरेतां प्रीतिपूर्वकम् ॥ ४३९ ॥

अन्यत्सर्वं तदीयं च यथादेशं यथाकुलम् ।
यथाकालं च विधिवच्चरेतां प्रीतमानसौ ॥ ४४० ॥

अथ तौ दंपती काल्ये समुत्थाय यथासुखम् ।
निर्वृत्तमङ्गळस्नानौ वस्त्राभरणभूषितौ ॥ ४४१ ॥

रम्यचन्दनलिप्ताङ्गौ दिव्यपुष्पशिरोरुहौ ।
अश्वत्थवृक्षमूलं च गच्छेतां पूतमानसौ ॥ ४४२ ॥

तत्रोपविश्य च पतिः प्राणायामं समाचरेत् ।
ततः कृत्वा तु सङ्कल्पं सात्विकत्यागपूर्वकम् ॥ ४४३ ॥

कुर्यादग्रे वृक्षराजपूजां चैव यथाविधि ।
ततश्च धर्मपत्न्या हि सार्धं भर्ता समाहितः ॥ ४४४ ॥

कुर्यात्प्रदक्षिणं तस्य वृक्षराजस्य सादरम् ।
अष्टोत्तरशतं चैव १ समन्त्रं च यथाविधि ॥ ४४५ ॥

२ प्रणवाद्यैर्ब्रह्मबीजैर्नमश्शब्दान्तलक्षणैः ।
पूजाः सर्वाश्च कार्याः स्युर्वृक्षराजस्य तस्य हि ॥ ४४६ ॥

वृक्षराजस्य पूजायां पायसान्नं निवेदयेत् ।
श्वेतपुष्पाणि पूजायां प्रशस्यन्ते विशेषतः ॥ ४४७ ॥

१. समन्त्रमिति—वक्ष्यमाणप्रदक्षिणमन्त्रेणेत्यर्थः । २. ब्रह्मबीजैरिति—ह्रीं-श्रीं-क्लीं, इति बीजत्रयैरित्यर्थः । तथा चात्र—ओं-ह्रीं-श्रीं-क्लीं-नमः, इति भवति पूजार्थको मन्त्रः ।

"मूलतो ब्रह्मरूपाय मध्यतो विष्णुरूपिणे।
अग्रतः शिवरूपाय वृक्षराजाय ते नमः" ॥ ४४८ ॥

इति प्रदक्षिणार्थः स्यान्मन्त्रश्चैव महर्षयः।
अथ तौ दंपती चैव गृहमागत्य सादरम् ॥ ४४९ ॥

यथाशक्ति यथाकालं यथादेशं महर्षयः।
भोजयित्वा बान्धवांश्च तथान्यांश्च विशेषतः ॥ ४५० ॥

दत्त्वा सदक्षिणाकं च तांबूलं सफलं तथा।
तथा भुक्त्वा स्वयं चैव निवसेतां यथासुखम् ॥ ४५१ ॥

इत्थं गर्भाधानविधौ स्थानशुद्ध्यर्थकश्च हि।
संस्कारः कथितश्चास्ति योगिनो धर्मवत्सलाः ॥ ४५२ ॥

अथ गर्भाधानविधावर्थशुद्ध्यर्थकश्च यः।
संस्कारो विहितश्चैव सोऽयं वेद्यो महर्षिभिः ॥ ४५३ ॥

स च पुंसवनाख्यः स्याज्जीवाऽधिष्ठानपोषकः।
तृतीये मासि संप्राप्ते प्रथमे दशके पुनः ॥ ४५४ ॥

भर्त्रा हि गर्भिणीनां च स्त्रीणां चैव विशेषतः।
सोऽयं कार्यो भवेच्चेति कथितः शुद्धयोगिभिः ॥ ४५५ ॥

इत्थं पुंसवनशब्दरहस्यार्थो महर्षयः।
कथ्यते सप्रमाणं च पूर्वाचार्यैर्महर्षिभिः ॥ ४५६ ॥

जीवसामान्यवचनः पुंशब्दः स्यादितीर्यते।
अतः पुंशब्दवाच्यः स्यात्पुमान्स्त्री चाऽविशेषत ॥ ४५७ ॥

प्रसवः सवनार्थः स्यात्पुंस्त्रीलिङ्गः सुलक्षणः ।
इति तस्मादयं वेद्यः सर्वैश्चैवाधिकारिभिः ॥ ४५८ ॥

तत्पुंसः सवनं येन संस्कारेण विराजते ।
सोऽयं पुंसवनाख्यः स्यात्संस्कार इति शङ्करः ॥ ४५९ ॥

तत्कार्यबीजदोषस्य शान्तयेऽयं हि चोदितः ।
यदि स्यादन्यथा बीजस्रावो रोगाश्च जायते ॥ ४६० ॥

अथ वा १मूढरूपं च बीजं संजायते तदा ।
इति पुंसवनमिति वाक्यस्यार्थो निगद्यते ॥ ४६१ ॥

तदुक्तसमये भर्त्रा सुलग्ने च शुभाऽन्विते ।
वृद्धाऽनुमोदिते चैव स कार्यः स्यादितीर्यते ॥ ४६२ ॥

सुस्नातौ मन्त्रपूतौ च दंपती समलङ्कृतौ ।
२मण्टपं प्रविशेतां हि शुद्धं मङ्गळलक्षणम् ॥ ४६३ ॥

तत्र पत्नी कन्यकाभिः सार्धं चोपविशेत्ततः ।
सोऽयं पतिः पाणिपादं प्रक्षाळ्याचम्य चासने ॥ ४६४ ॥

साकं स्वधर्मपत्न्या च ह्युपविश्य यथाविधि ।
सदस्यैरभ्यनुज्ञातः प्राणानायम्य ३धर्मतः ॥ ४६५ ॥

१. मूढरूपमिति—विकलाङ्गमित्यर्थः । २. मण्टपमिति — तत्संस्कारकरण-स्थानामित्यर्थः । ३. धर्मत इति स्वभावत इत्यर्थ । एवमेवात्र सर्वत्र भवतीति विज्ञेयम् ।

अष्टाङ्गं चैव सङ्कल्पं सात्विकत्यागपूर्वकम् ।
कृत्वा विघ्नेशपूजां च यथाकल्पं समाचरेत् ॥ ४६६ ॥

ततः कुर्याद्यथाशास्त्रं १चाग्न्याऽऽधानं महर्षयः ।
अथाऽग्नेरुत्तरस्मिंश्च स्थाने कुंभं च सोदकम् ॥ ४६७ ॥

स्वलङ्कृतं च संस्थाप्य प्राणायामादिपूर्विकाम् ।
आवाहनादिपूजां च २विधिवच्च समाचरेत् ॥ ४६८ ॥

अथ तत्कुंभतीर्थेन यज्ञद्रव्याणि सर्वशः ।
पत्नीं चैव विशेषेण ३प्रोक्षयेन्मन्त्रपूर्वकम् ॥ ४६९ ॥

तत्पुंसवनकर्माङ्गं द्रव्यं चेदं हि कथ्यते ।
मुख्यं च कल्पकारैश्च शुद्धार्यैश्च महर्षिभिः ॥ ४७० ॥

४सिद्धस्य वटवृक्षस्य शाखायां हि महर्षयः ।
जटिलायामुत्तरस्यां दिशि चैव विशेषतः ॥ ४७१ ॥

दीर्घायां च समुत्पन्ना ५सुधावृक्षादिनीति या ।
नाम्ना हि विदिता चैवं पीतकोरकशोभिता ॥ ४७२ ॥

१. अग्न्याधानमिति—समन्त्रकं च क्रियमाणमग्निसन्धानमित्यर्थः । २. विधिवच्चेति—तत्तच्छाखाप्रसिद्धं पुण्याहवाचनाख्यं विधिमनुसृत्येत्यर्थः । ३. मन्त्रपूर्वकमिति—तत्तच्छाखोदितप्रोक्षणमन्त्रेणेत्यर्थः । ४. सिद्धस्येति—सफलस्येत्यर्थः । ५. सुधावृक्षादिनीति—वृक्षादिनीत्यर्थः । तद्गुणश्चात्र सुधेति कथ्यते । ओषधिरियं केषु चित् 'वटाश्वत्थप्लक्षनिंबनारङ्गजंबूपन-

तथा ताम्रफलोपेता दिव्यौषधिरचंचला ।
तां च विज्ञाय तस्यास्तु सफलं कोरकं हरेत् ॥ ४७३ ॥

फलद्वयः कोरकश्च १ भवेत्पुंलिङ्गलक्षणः ।
एको यश्च भवेत्सोऽयं शस्तः पुंसवने परे ॥ ४७४ ॥

तदभावे तु २ शुङ्गं च वटवृक्षस्य तादृशम् ।
सफलं चैव नूत्नं च सक्षीरं हि समाचरेत् ॥ ४७५ ॥

इत्यतश्चाऽपरं द्रव्यं क्षीरं कपिलगोर्वरम् ।
तथा दीर्घचतुरस्रा ३ दृषत्पेषकसंयुता ॥ ४७६ ॥

स्वलङ्कृता कुङ्कुमाद्यैर्विशुद्धा च विशेषतः ।
या च साऽपि भवेद्द्रव्यं तत्पुंसवनकर्मणि ॥ ४७७ ॥

साऽऽम्रकोविदारबीजपूरादिषु वृक्षेषु शाखाग्रेषु च स्वयमेव सञ्जायते । अस्याः पर्यायनामानि च — वृक्षादिनी, सुधावृक्षादिनी, अपत्यसिद्धिः, बीजसिद्धिः, पुंसवना, लिंगिनी, दीर्घकेसरा, ब्राह्मणी, गर्भधात्री, निर्यासरुहा, कामिनी, सारिणी, रक्तफला, पीतपुष्पा, इति कालावसे सिद्धशास्त्रे चतुर्दश परिगणितानि सन्ति । एषा च माल्लिकाकारा भवति । १. पुल्लिङ्गलक्षण इति — शिश्नाख्यमङ्गं हि बालानां यथा च वृषणद्वयमध्यगं भवति, तथाऽयमपि तादृशो भवतीत्यर्थः । २. शुङ्गामिति-वटवृक्षस्य हि फलद्वयोपहितकोरकमित्यर्थः । ३. दृषदिति—पदार्थानां मर्दनस्याऽधिष्ठानभूता च शिलाऽभिधीयते । पेषक इत्यनेन तन्मर्दनसघनीभूता दीर्घपिण्डाकारा तद्दृषदश्चोपरि विद्यमाना च शिला ह्यभिधीयते । तदुभे शिले च गृह्यसूत्रेषु "दृषत्पुत्रे दृषत्पुत्रेण" इति प्रसिद्धे भवतः ।

गर्भरक्षाकरं सूत्रं हरिद्राक्तं [1]यथाविधि ।
श्वेतार्कतन्तुनिर्वृत्तं तुरीयं द्रव्यमुच्यते ॥ ४७८ ॥

एवं कन्याद्वयं चाऽपि प्रशस्तं द्रव्यमुच्यते ।
द्रव्याण्येतानि सर्वाणि प्रोक्षयेदिति बुध्यताम् ॥ ४७९ ॥

अथ भर्ता यथाशास्त्रं तत्प्राणायामपूर्वकम् ।
सात्विकत्यागपूर्वं च सकर्मवचनं चरेत् ॥ ४८० ॥

अथैवं च प्रागग्रेषु तत्कुशेषु च सप्तसु ।
क्षिप्तेषु भर्ता पत्नीं तां यथा शास्त्रं न्यवेशयेत् ॥ ४८१ ॥

ततो वामं करं पत्न्या गर्भरक्षाकरेण च ।
सूत्रेण भर्ता बन्धातु [2]समन्त्रं च यथाविधि ॥ ४८२ ॥

इदं रक्षाबन्धनाख्यं कर्म इत्यभिधीयते ।
अग्नेश्च पश्चिमे भागे कार्यमित्येव निर्णयः ॥ ४८३ ॥

ततः समुचितस्थाने पत्नी संशोधयेत्स्वयम् ।
नासाद्वारं यथाकल्पं यथासुखमकुत्सितम् ४८४ ॥

अथ पत्नी यथापूर्वं मुक्तनासाविभूषणा ।
समीपं भर्तुरागच्छेत्तत्पुंसवनकांक्षिणी ॥ ४८५ ॥

१. यथाविधि इति—समन्त्रमित्यर्थः । हरिद्रालेपनसमये "ओं-ह्रीं-हुं-ठं-रक्ष-रक्ष नमः" इति विद्याध्यायप्रसिद्धं मन्त्रमुच्चारयेत्, इति विज्ञेयम् ।
२. समन्त्रमिति-हरिद्रालेपनमन्त्रेणेत्यर्थः ।

अथाऽग्नेश्चोत्तरे भागे ह्युदगग्रान्कुशान्क्षिपेत् ।
एकादश च पत्नीं तां तत्र संस्थापयेत्पतिः ॥ ४८६ ॥

प्राङ्मुखं च ततः पत्नी वह्निमध्ये च पूर्ववत् ।
कुशानुदङ्मुखांश्चैव समास्तीर्य यथाविधि ॥ ४८७ ॥

तत्राऽभिवर्णितां चैव दृषदं १ गुडकान्विताम् ।
स्थापयेच्च विधानेन २सनन्त्रं च पतिः स्वयम् ॥ ४८८ ॥

तत्र न्यसेत्कोरकं च सफलं शुङ्गमेव वा ।
सुधावृक्षादिनी या च तस्याश्चाऽपि वटस्य वा ॥ ४८९ ॥

अथ भर्ता यथाशास्त्रं प्राणायामादिपूर्वकम् ।
कोरकस्य च शुङ्गस्य ३ मन्त्रेणोत्थापनं चरेत् ॥ ४९० ॥

ततो राजतपात्रस्थं कपिलाक्षीरमेव च ।
अभिमन्त्र्य च ४ मन्त्रेण पत्न्या वामकरे न्यसेत् ॥ ४९१ ॥

अथाऽलङ्कृतयोश्चैव कन्ययोश्च करेण हि ।
मर्दनं कोरकस्यैव सफलस्य च कारयेत् ॥ ४९२ ॥

१. गुटक इति—पेषकशिलेत्यर्थः । २. समन्त्रमिति—ओं ह्रीं-सौः अमृतायुष्मत्यै नमः, इति मन्त्रसहितमित्यर्थः । ३ मन्त्रेणेति — ओं-सौः. श्रीं —ह्रीं वीर्यवती भव स्वाहा, इति मन्त्रेणेत्यर्थः ॥ ४. मन्त्रेणेति—ओं-सौः हिं — श्रीं — ह्रीं—अमृतं भव स्वाहा, इति मन्त्रेणेत्यर्थः ॥

पत्नी च कपिलाक्षीरं सेचयेच्च शनैः शनैः।
तत्सफलकोरकस्य मर्दने सति धर्मतः ॥ ४९३ ॥

अथ संमर्दितं चैव सफलं कोरकं पुनः।
पत्न्याश्च पट्टवस्त्रस्य नूतनस्यान्ते च बन्धयेत् ॥ ४९४ ॥

द्वाभ्यां कुशाभ्यां [1]मन्त्रेण ततः पत्नी यथाविधि।
क्षीरपात्रं न्यसेत्तस्यां दृषदि प्रीतमानसा ॥ ४९५ ॥

तं च वै कोरकग्रन्थिं तस्मिन्पात्रे च डोलयेत्।
अथ भर्ता यथाकल्पं प्राणायामादिकं पुनः ॥ ४९६ ॥

कृत्वा ह्यनुज्ञामृत्विग्भ्यः प्राप्याऽभ्यर्च्य च तानपि।
सर्वानन्यान्निष्क्रमय्य चान्यत्र हि यथा सुखम् ॥ ४९७ ॥

कुशेषु चोदगग्रेषु पत्नीं प्राङ्मस्तकां तथा।
उत्तानां शाययेद्विद्वान्यथासुखमतन्द्रितः ॥ ४९८ ॥

अथ दिव्यौषधिग्रन्थिं गृहीत्वा [2]मन्त्रपूर्वकम्।
दक्षिणेन च हस्तेन पेषयित्वा [3]समन्त्रकम् ॥ ४९९ ॥

अङ्गुष्ठमध्यमाभ्यां च ततः पत्न्याश्च दक्षिणे।
नासाच्छिद्रे नाययेच्च तद्रसं [4]मन्त्रपूर्वकम् ॥ ५०० ॥

---

१. मन्त्रेणेति —ओं—सौः—श्रीं ह्रीं—ऊर्जस्वती भव स्वाहा, इति मन्त्रेणेत्यर्थः। २. मन्त्रपूर्वकमिति— ओं — सौः—श्रीं—ह्रीं— विभूतिमती भव स्वाहा, इति मन्त्रमुच्चार्येत्यर्थः। ३. समन्त्रकमिति — ओं—सौः ईं—श्रीं ह्रीं— तेजस्विनी भव स्वाहा, इति मन्त्रमुच्चार्येत्यर्थः। ४. मन्त्रपूर्वकमिति— ओं—खं—हिं—सौः—श्रीं—ह्रीं—बलवती भव स्वाहा, इति मन्त्रमुच्चार्येत्यर्थः।

तदा मङ्गळवाद्यानि वादयेच्च यथाविधि।
तथा सुमङ्गलीभिश्च नारीभिः १शुद्धमानसाः ॥ ५०१ ॥

गानं शुभकरं चैव कारयेर्२दैवलक्षणम्।
तथा पुष्पाणि शुक्लानि विकिरेदक्षतैः सह ॥ ५०२ ॥

अथ पत्नी तद्रसं च मन्त्रपूतं पिधाय हि।
वामं च नासिकारन्ध्रमुन्नयेच्च यथासुखम् ॥ ५०३ ॥

अन्तर्ललाटं संस्पृष्टो रसोऽयमनुभूयते।
पत्न्या यदा तदा भर्ता पत्नीमुत्थापयेच्छनैः ॥ ५०४ ॥

अथ सर्वान्समानीय बन्धूनन्यांश्च सादरम्।
दंपती प्रणमेतां तान्तेभ्यः संप्राप्य चाशिषः ॥ ५०५ ॥

सर्वांश्चैव यथाकामं भोजयित्वा यथासुखम्।
सदक्षिणाकं तांबूलं ददतां प्रीतिपूर्वकम् ॥ ५०६ ॥

अथ तौ दंपती भुक्त्वा बन्धून्प्रस्थाप्य सादरम्।
निवसेतां ३समायुक्तौ विशुद्धौ पुण्यलक्षणौ ॥ ५०७ ॥

इति गर्भाधानविधौ चार्थशुद्ध्यर्थकः परः।
पुंसवनाख्यसंस्कारः कथितः स्यान्महर्षयः ॥ ५०८ ॥

१. शुद्धमानसा इति—महर्षयश्च संबुध्यन्ते । २. दैवलक्षणमिति—समताळं भगवद्विषयं च गानं भवतीत्यर्थः । ३. समायुक्ताविति-विना ह्येकशय्यां स्थाने चैकस्मिन्नेव शय्यां शयानावित्यर्थः ।

अथ गर्भाधानविधौ कर्तृशुद्ध्यर्थकश्च यः ।
संस्कारः सोऽयमित्थं हि वर्ण्यते पूर्वसूरिभिः ॥ ५०९ ॥

सीमन्तोन्नयनाख्यः स्यात्सोऽयं हि मुनिपुङ्गवाः ।
कार्योऽयमपि भर्त्रा स्यादथ [1]वान्यैश्च कारयेत् ॥ ५१० ॥

कर्तृशुद्ध्यर्थकेऽस्मिंश्च संस्कारे तु महर्षयः ।
सीमन्तोन्नयनं नाम कर्म कार्यमितीर्यते ॥ ५११ ॥

इत्थं सीमन्तोन्नयनशब्दार्थो वर्ण्यते बुधैः ।
स्त्रीणां मूर्ध्नि ललाटाग्रात्केशस्य हि विशेषतः ॥ ५१२ ॥

समो विभागः क्रियते व्यक्ते गर्भे च येन हि ।
स सीमन्तोन्नयनाख्यः स्यादित्येवाऽत्र निर्णयः ॥ ५१३ ॥

यावद्गर्भं न धत्ते च या च नारी सुमङ्गली ।
तस्यास्तावत्केशबन्धो यथेच्छं हि विधीयते ॥ ५१४ ॥

अतः पुत्रवतीनां च नारीणां संप्रजायते ।
सीमन्तिनीति विद्यासु व्यवहारश्च धर्मतः ॥ ५१५ ॥

अत एव यदा गर्भो भवेत्स्त्रीणां सुलक्षणः ।
सीमन्तोन्नयनं कर्म कार्यं भर्त्रा तदैव हि ॥ ५१६ ॥

इत्थं गुरुरहस्ये स्यात्तदिदं चाभिवर्णितम् ।
विशेषतः सदृष्टान्तं सङ्क्षेपस्तस्य कथ्यते ॥ ५१७ ॥

१. अन्यैरिति-गर्भिणीभिश्च स्त्रीभिर्निर्दिष्टैरित्यर्थः ।

सीमन्तिनीति च स्त्रीणां नाम सीमन्तदर्शनात् ।
अन्वर्थं च भवेदेवं व्यवहारश्च दृश्यते ॥ ५१८ ॥

लोकानां दिव्यदृष्टिश्च स्वात्मविज्ञानलक्षणा ।
पाण्डित्यं सर्वविद्यासु वैदग्ध्यं सर्वकर्मसु ॥ ५१९ ॥

देवतासु दृढा भक्तिर्मन्त्रसिद्धिर्महीयसी ।
इदं सर्वं च नियतं यदा स्याच्च तदैव हि ॥ ५२० ॥

सीमन्तोन्नयनं कर्म क्रियते चाधिकारिभिः ।
सत्यदृष्ट्या यथाशास्त्रं यथादेशं यथाबलम् ॥ ५२१ ॥

भर्ता हि शिक्षितश्चैव सद्भिश्चैव पुरोहितैः ।
श्लक्ष्णशास्त्रो [1]निरूढाङ्गः सीमन्तोन्नयनं चरेत् ॥ ५२२ ॥

तत्र हि प्रथमं [2]त्रेण्या [3]शलल्या च यथाविधि ।
पिशाचोदुंबरक्षीरं गृहीत्वा हि ततः पुनः ॥ ५२३ ॥

तत्र वै निक्षिपेच्छुद्धे चूतपत्रे ततश्च हि ।
[4]सत्त्वं [5]महौषधैश्चैव शलल्या च तथैव हि ॥ ५२४ ॥

समाहरेत्ततश्चैतद्द्वयं चैव विशेषतः ।
समायोज्य यथाकल्पं शलल्यग्रे निधाय च ॥ ५२५ ॥

१. निरूढाङ्ग इति-निष्कंपहस्त इत्यर्थः । २. त्रेण्येति-त्रिभिश्च शुक्लपर्वभिरुपलक्षितयेत्यर्थः । ३. शलल्येति—वराहकण्टकेनेत्यर्थः । ४. सत्त्वमिति-क्षारमित्यर्थः । ५. महौषधैरिति-अभिवर्णितवृक्षादिभ्या इत्यर्थः ।

यथापूर्वं चूतपत्रे शलली तां निवेशयत् ।
ततो भर्ता गर्भिणी तां पत्नीं चैव यथाविधि ॥ ५२६ ॥

प्राङ्मुखं विहिते शुद्धे चासने विनिवेशयेत् ।
ततो विशुद्धशस्त्रश्च भर्ता साकं विचक्षणैः ॥ ५२७ ॥

ऋत्विग्भिश्च करेणैव वामेन च यथाविधि ।
अवष्टभ्य हि पत्न्याश्च मस्तकं तु यथासुखम् ॥ ५२८ ॥

ततः सीमन्तसरणिं [1]सुखेषिण्या रसेन च ।
विलेपयेद्यथाशास्त्रं ततः शस्त्रं च निर्मलम् ॥ ५२९ ॥

गृहीत्वा दक्षिणेनैव करेण च यथाविधि ।
तेन शस्त्रेण पत्न्याश्च सीमन्तसरणिं पुनः ॥ ५३० ॥

आरभ्य च ललाटाग्रात्तथा [2]चारक्तमण्डलम् ।
[3]मन्त्रोच्चारणपूर्वं हि च्छेदयेदथ तद्व्रणे ॥ ५३१ ॥

तिलप्रमाणनिम्ने च सत्त्वं चैव महौषधेः ।
विलेपयेच्छललया तु तया चैव ततः पुनः ॥ ५३२ ॥

१. सुखेषिण्या इति-यस्याश्च रसस्य लेपेन स्पर्शो विनश्यति, तस्याश्च मूलिकाया इत्यर्थः । २. रक्तमण्डलमिति-अर्धमण्डलाकाररेखं सीमन्तान्तं च स्थानमित्यर्थः । ३. मन्त्रोच्चारणपूर्वमिति-ओं-ह्रीं-सौः-श्रीं-सोमदेवते भद्रसेनेऽभिरक्षस्व स्वाहा, इतिमन्त्रमुच्चार्येत्यर्थः ।

छिन्नस्थानं रसेनैव [1]शल्यिण्याश्च विलेपयेत् ।
अथवाभ्युक्षयेत्पत्नीं गर्भिणीं [2]मन्त्रवारिणा ॥ ५३३ ॥

ततः पत्नी निश्चलाङ्गी ध्यायन्ती पुत्रदं पतिम् ।
तत्रैवोपविशेत्सम्यगुच्चरेच्चा [3]ऽमृताक्षरम् ॥ ५३४ ॥

एवं सीमन्तदेशे च क्षिप्तं सत्त्वं महौषधेः ।
विनाडिकात्रयेणैव कालेन च निरामयम् ॥ ५३५ ॥

पत्न्यास्तस्या गर्भपिण्डं चाविशत्यमृतप्रदम् ।
एवं तेन च सत्त्वेन प्रसूतो गर्भः सुलक्षणः ॥ ५३६ ॥

आयुष्मान्मातृसुखदः सुखी सभ्रातृकः शुचिः ।
निर्गदः स्वात्मविज्ञानसाधनाणुसमुज्वलः ॥ ५३७ ॥

शुद्धभावसमृद्धश्च वर्चसा चौजसा तथा ।
व्यवसायक्षमश्च स्यात्ततश्चेदं मुनीश्वराः ॥ ५३८ ॥

अशिक्षितैर्नैव कार्यं चेति कल्पविदो विदुः ।
तस्माच्च मानसं तच्च मन्त्रसिद्धं कलौ भवेत् ॥ ५३९ ॥

तच्च वै द्विविधं प्रोक्तं शुद्धं चाऽशुद्धमित्यपि ।
विज्ञेयमस्ति तत्त्वेन शुद्धं चात्मीयमुच्यते ॥ ५४० ॥

१. शल्यिण्या इति—सन्धानकरण्या मूलिकाया इत्यर्थः । २. मन्त्रवारिणेति·ओं-चं·सौः·ह्रीं·नमः, इति मन्त्रेणाऽभिमन्त्रिततीर्थेनेत्यर्थः । ३. अमृताक्षरमिति·ओं·सौः मृतसञ्जीविनि स्वाहा, इति मन्त्रमित्यर्थः ।

अशुद्धं प्राकृतमिति शुद्धार्यैश्च महर्षिभिः।
तत्र शुद्धं हि शुद्धार्यैः क्रियते चेति निर्णयः ॥ ५४१ ॥
इदमत्र हि विज्ञेयं रहस्यं धर्मकोविदैः।
पुत्रकामौ च धर्मज्ञौ तत्त्वज्ञौ शास्त्रकोविदौ ॥ ५४२ ॥
शुद्धाभिजनसंपन्नौ शुद्धसंस्कारलक्षणौ।
हार्देश्वरोपासकौ यौ दंपती च विचक्षणौ ॥ ५४३ ॥
ताभ्यां चैव यथाशास्त्रं क्रियमाणेषु कर्मसु।
तथा संस्काररूपेषु ताभ्यां चैव विशेषतः ॥ ५४४ ॥
प्रार्थिता लोकनाथाज्ञापालका धर्मवत्सलाः।
अन्तर्धानगताः सिद्धाः कामरूपाश्च धर्मतः ॥ ५४५ ॥
देवापिपीठनिलयाः शुद्धधर्मपरायणाः।
अदृश्याः संस्थिताश्चैव स्वविशुद्धतपोबलात् ॥ ५४६ ॥
सीमन्तोन्नयनं चेदं तथान्यत्कर्म हि श्रुतम्।
स्वयमपि च कुर्वन्ति १परमार्थं च वीर्यवत् ॥ ५४७ ॥
इति तस्माद्दंपती च शुद्धधर्मपरायणौ।
नरनारायणाभ्यां च लोकेशाभ्यां तथैव हि ॥ ५४८ ॥
तत्पार्षदैश्च सिद्धैर्हि क्रियते सर्वमेव च।
अवां तत्प्रतिनिधी च भवाव इति तत्त्वत, ॥ ५४९ ॥

१. परमार्थमिति-आत्मीयमिति यावत्। तथा सति च संस्काराणां तत्तद्व्यवसायक्षमत्वमिति शुद्धार्यसिद्धान्तः।

निर्णयेतां विशुद्धेन भावेन च महर्षयः ।
इति शुद्धार्थसिद्धान्तो विज्ञेयः स्यान्मनीषिभिः ॥ ५५० ॥

वर्णाश्रमसुसिद्धेषु संस्कारेषु यथा भवेत् ।
सर्वाधिकारिणां चैव शलल्यादि च साधनम् ॥ ५५१ ॥

तथा च लोकनाथाज्ञापालकानां च योगिनाम् ।
वर्णाश्रमविधानेषु तेषु तेषु च कर्मसु ॥ ५५२ ॥

तदेव साधनं सर्वं विजातीयार्थकं भवेत् ।
विजातीयस्वरूपं च यथात्रैवं हि तद्भवेत् ॥ ५५३ ॥

श्रेणी च शलली यातु सा स्याच्छक्तिर्महीयसी ।
त्रिमुखी त्रिविधा चैव सिद्धानां चेति निर्णयः ॥ ५५४ ॥

एव मेव हि सर्वत्र साधनानि महर्षयः ।
विज्ञेयानि यथातत्त्वं शुद्धदासैर्विशेषतः ॥ ५५५ ॥

किं च केचिन्महासिद्धाः शुद्धाऽऽज्ञापालकाः शिवाः ।
यथादेशं यथाकालं सर्वेषां प्राणिनां पुनः ॥ ५५६ ॥

प्राकृतात्मीयभावाऽभिवृध्यै चैव यथाक्रमम् ।
यथाविधि च संस्कारान्कुर्वन्तीति च निर्णयः ॥ ५५७ ॥

इतिहासरहस्येऽपि चैवमेव महर्षयः ।
व्याख्यातं स्यात्सदृष्टान्तं तदिदं ब्रह्मसूनुना ॥ ५५८ ॥

सीमन्तोन्नयनाच्छुद्धात्कर्तृशुद्धयर्थकात्पुनः ।
जातः पुमांश्च संपूर्णो भवेदिति च निर्णयः ॥ ५५९ ॥

यदशुद्धं प्राकृतं च वर्णाश्रमविधानजम्।
सीमन्तोन्नयनं तस्माल्लोकवृद्धिर्न जायते ॥ ५ ० ॥

अतो वर्णाश्रमाः सर्वे कलौ संस्कारलक्षणाः।
१ सम्यक्परिणताश्चैव दृश्यन्ते च स्वभावतः । ५६१ ॥

ततश्च२ दिव्यदृष्टीनां तदिदं प्रथमं वरम्।
तथा ३ प्राकृतदृष्टीनां चाऽपरं स्यादितीर्यते ॥ ५६२ ॥

दिव्यदृष्टिश्च शुद्धार्यप्रसादात्समदर्शनात्।
जायते च तथाऽन्यस्मान्नेति शास्त्रैरुदीर्यते ॥ ५६३ ॥

तुरीये मासि षष्ठे वा चाष्टमे वा महर्षयः।
सीमन्तकर्मकालः स्याद्गर्भे व्यक्ते च धर्मतः ॥ ५६४ ॥

इत्थं सीमन्तसंस्कारलक्षणं कर्म कथ्यते।
यथादेशं यथाकालं कर्तव्यम् तदिदं भवेत् ॥ ५६५ ॥

शोभने दिवसे चैत्र भर्ता स्नात्वा यथाविधि।
पत्न्यास्तु मङ्गळस्नानं कन्याभिः सह कारयेत् ॥ ५६६ ॥

ततः स्वलङ्कृतां पत्नीं हस्ते कृत्वा यथाविधि।
मण्टपं प्रविशेच्चाथ सदस्यैः सह सङ्गतः ॥ ५६७ ॥

१. सम्यक्परिणता इति—लोकस्वरूपाऽननुरूपत्वात् महानिर्वेदजनकत्वाच्च स्वरूपान्तरं च प्राप्ताः,—इत्यर्थः । २. दिव्यदृष्टीनां इति-आत्मशक्तिमतां इत्यर्थः । ३. प्राकृतदृष्टीनां इति—शरीरमात्रेण चतुर्वर्ण्यनिर्णेतृणां इत्यर्थः ।

पुरोहितैः सदस्यैश्च ह्यनुज्ञातो यथाविधि ।
सीमन्तोन्नयनं कर्म कर्तृशुद्ध्यर्थकं चरेत् ॥ ५६८ ॥

अथ भर्ता यथाशास्त्रं कल्पिते मङ्गळासने ।
सहोपविश्य पत्न्या हि सपवित्रकरः शुचिः ॥ ५६९ ॥

प्राणानायम्य सङ्कल्पं साङ्गं चैव हि सार्थकम् ।
सात्त्विकत्यागपूर्वं च यथाकल्पं समाचरेत् ॥ ५७० ॥

अथ सीमन्तहोमं तदग्निसन्धानपूर्वकम् ।
भर्ता कुर्याद्यथाकल्पं देवतात्रयलक्षणम् ॥ ५७१ ॥

अत्राऽष्टौ कीर्तिता होमास्तिस्रः स्युः पूज्यदेवताः ।
यथादैवतमेवात्र होमसंख्या च कीर्तिता ॥ ५७२ ॥

धाता विधाता सन्धाता चेति स्युर्देवताश्च ताः ।
तत्र हि प्रथमस्यैव होमः स्याद्द्विदलक्षणः ॥ ५७३ ॥

होमत्रयं चान्ययोः स्यात्प्रत्येकं चेति निर्णयः ।
यथाशास्त्रं हि मन्त्राश्च कल्पाचार्यनिरूपिताः ॥ ५७४ ॥

शुद्धानां [1]गौतमीविद्यामन्त्राः सीमन्तकर्मणि ।
प्रयोक्तव्या भवन्तीति कथ्यते ब्रह्मसूनुना ॥ ५७५ ॥

१. गौतमीविद्यामन्त्राः इति—गौतमीनाम्नी योगदेवीस्वरूपा सिद्धकन्यका भवति या, तयोक्तमन्त्रा इत्यर्थः। ते च—(१)ओं-ह्रीं-श्रीं-सौः-कं-हिं-सौः-धात्रे देवाय स्वाहा, (२) ओं-ह्रीं-क्लीं-सौः-ऐं-क्रीं-श्रीं-धात्रे देवाय स्वाहा, (३) ओं-ह्रीं-ऐं-श्रीं-सौः-धात्रे देवाय स्वाहा, (४) ओं-हं-खं-ह्रीं-श्रीं-क्लीं-सौः-ऐं क्रीं-श्रीं

एवं सीमन्तहवनं कृत्वा मन्त्रेण धर्मतः ।
सीमन्तोन्नयनकर्म विधिवच्च समाचरेत् ॥ ५७६ ॥

ततो भर्ता सुबद्धाङ्गः शुद्धहस्तः प्रसन्नधीः ।
बद्धाञ्जलिपुटश्चैव श्रद्धाभक्तिसमन्वितः ॥ ५७७ ॥

"ओं जगद्धातृभावेश पुराण पुरुषोत्तम ।
सीमन्तकर्म विधिवच्छुद्धं वै धर्मलक्षणम् ॥ ५७८ ॥

शुद्धार्यभक्तिबद्धेन सङ्कल्पेन यथामति ।
करिष्ये देव ते चाज्ञाबद्धश्चैव विशेषतः ॥ ५७९ ॥

यच्चशुद्धं परं कर्म तदिदं लोकशङ्कर ।
कर्तव्यं भवतैवेति कथयन्ति विचक्षणाः ॥ ५८० ॥

ततो नारायणं देवं नरदेवस्वरूपिणम् ।
योगदेवीसनाथं च भवन्तं सिद्धमण्डलैः ॥ ५८१ ॥

तथा महात्मभिश्चैव सर्वैश्चान्यैः सुसेवितम् ।
भजामि शरणं शुद्धचेतसाऽनन्यगामिना" ॥ ५८२ ॥

धात्रे देवाय स्वाह । इति चत्वारः प्रथमदेवताहोममन्त्राः । (१) ओं-ह्रूँ-श्रीं-श्रीं-ओं-न-मः-ना-रा-य-णा-य-सौः-हिं-देवाय विधात्रे नारायणाय स्वाहा, (२) ओं श्रीं-भद्राय विधात्रे देवाय स्वाहा' इति द्वौ द्वितीयदेवताहवनमन्त्रौ भवतः । ओं-ह्रूँ-श्रीं-क्लीं-न-मः-शि-वा-य-सौः-हिं-महादेवाय सन्धात्रे देवाय स्वाहा, ओं-श्रीं-ह्रीं-भद्रमुखाय वीरभद्राय सन्धात्रे देवाय स्वाहा, इति द्वौ तृतीयदेवताहवनमन्त्रौ भवतः, इति मन्त्रस्वरूपमवधेयं भवति ।

इति पञ्चस्तवं चैव सिद्धनागार्जुनोदितम् ।
पवित्रं सर्वमन्त्राणां जपेदिष्टार्थसिद्धये ॥ ५८३ ॥

अथ भर्ता च पत्नीं तां शुद्धदर्भासने पुनः ।
पश्चिमाऽभिमुखीं चैव सस्नेहमुपवेशयेत् ॥ ५८४ ॥

ततः सुगन्धितैलं च शुद्धं वै केशरञ्जनम् ।
गृहीत्वा हि यथाकामं १मन्त्रपात्रे निरूपयेत् ॥ ५८५ ॥

२ज्योतिष्मत्या विद्यया तदभिमन्त्र्य यथाविधि ।
तैलेन तेन गर्भिण्याः केशान्संशोधयेदथ ॥ ५८६ ॥

प्रक्षाल्य पाणिपादं च प्राणानायम्य धर्मतः ।
संकल्पपूर्वकं चैव नान्दीश्राद्धं समाचरेत् ॥ ५८७ ॥

ततश्च ३सुरथादेव्याः ४कवचं ५दक्षसेवितम् ।
सर्वगुह्यतमं चैव जपेच्छ्रद्धासमन्वितः ॥ ५८८ ॥

---

१. मन्त्रपात्रे इति—तैलाभिमन्त्रणयोग्यपात्र इत्यर्थः । २. ज्योतिष्मत्या इति—ओं श्रीं ऊर्जस्वत्यै स्वाहा, इति प्रसिद्धज्योतिष्मतीविद्ययेत्यर्थः । ३. सुरथादेव्या इति—सुरथेति प्रसिद्धस्वयंवरानाम्न्याः पार्वत्यंशभूताया देव्या इत्यर्थः । ४. कवचमिति—मन्त्ररूपं रक्षाकरं स्तोत्रमित्यर्थः । तत्स्वरूपमित्थम्—

"ओं श्रीं ह्रीं क्लीं महादेवि शिवे हिमवतः सुते ।
स्वयं वरे परे देवि सुरथे रक्ष मां सदा ॥
क्रीं क्रीं श्रीं श्रीं सिद्धसेव्ये सिद्धमन्त्राधिदेवते ।
नमस्तेऽमृतबीजाच्ये पाहि मां शरणागतम् ॥"

इति भवति प्रसिद्धम् । ५. दक्षसेवितमिति—दक्षनाम्ना सिद्धेन सेवितमित्यर्थः ।

ततश्च प्राणानायम्य सङ्कल्पं च यथाविधि।
त्रेण्या विशुद्धया चैव शलल्या दर्भबद्धया ॥ ५८९ ॥

गर्भिण्या धर्मपत्न्याश्च [1]मन्त्रपूर्वं समाहितः।
कुर्यात्केशविभागं च रम्यं सीमन्तलक्षणम् ॥ ५९० ॥

तदा मङ्गळवाद्यानि वादयेच्च यथाविधि।
तथा च देवगानं च यथादेशं समाचरेत् ॥ ५९१ ॥

ततस्तां शललीं चैव प्राच्यां दिशि निरस्य च।
उक्त्वा च स्वरितवचनं तथा चाप उपस्पृशेत् ॥ ५९२ ॥

ततस्तौ दंपती चैव ह्युपविष्टौ वरासने।
प्राङ्मुखौ शृणुतां वीणागानं चैव समाहितौ ॥ ५९३ ॥

अथ भर्ता समुत्थाय चाचम्य हि यथाविधि।
प्राणानायम्य सङ्कल्पं सात्विकत्यागपूर्वकम् ॥ ५९४ ॥

कृत्वा सीमन्तदेशे तु पत्न्या मङ्गळलक्षणे।
श्रियं सपरिवारां च समावाह्याऽथ पूजयेत् ॥ ५९५ ॥

पूजाः सर्वाश्च विधिवच्छ्रियः कृत्वा [2]समन्त्रकम्।
प्रार्थनापूर्विका देया श्रियै पुष्पाञ्जलिः पुनः ॥ ५९६ ॥

" योगेश्वरि परेशानि महादेवि महेश्वरि।
महाभाग्यप्रदे रम्ये ब्रह्मण्ये सर्वमङ्गळे ॥ ५९७ ॥

---

१. मन्त्रपूर्वमिति—ओं श्रीं स्वाहा, इति मन्त्रमुच्चार्येत्यर्थः । २. समन्त्रकमिति—ओं श्रीं ह्रिं नमः, इति मन्त्रेणेत्यर्थः. ।

आत्मशक्तिस्वरूपा त्वं ब्रह्मशक्तिस्वरूपिणी ।
भवस्यार्तिशरण्या च त्वमेव जगदीश्वरी ॥ ५९८ ॥

महालक्ष्मिस्वरूपा त्वं त्वमेव शिववल्लभा ।
त्वमेव शारदा देवी त्वं कन्या च स्वयंवरा ॥ ५९९ ॥

त्वं माया त्रिविधा चाऽपि त्वमेवाऽसि परात्परा ।
सुरथा भद्रकाली त्वं गौतमी वनदेवता ॥ ६०० ॥

वनदुर्गा च चामुण्डी प्रणवाद्या पराऽवरा ।
भवस्याऽऽनन्दिनी चैव सच्चिदानन्दरूपिणी ॥ ६०१ ॥

नमस्ते कमले देवि शङ्खचक्रगदाधरे ।
यावच्छक्यं पूजयामि प्रसीद परमेश्वरि ॥ ६०२ ॥

धर्मपत्न्या मम सदा स्थानं सीमन्तलक्षणम् ।
अधितिष्ठ महामन्त्रबीजयन्त्राऽधिदेवते" ॥ ६०३ ॥

इति पुष्पाञ्जलिस्तोत्रं सर्वगुह्यतमं वरम् ।
जपन्निदं च भक्त्या हि सर्वमङ्गळदायकम् ॥ ६०४ ॥

देव्यै समर्पयेदेवं शुद्धपुष्पाञ्जलिं पुनः ।
ततो नीराजनां चैव विधिवच्च समाचरेत् ॥ ६०५ ॥

यतः प्रभृति पत्नी च शुद्धा सीमन्तिनी भवेत् ।
ततः प्रभृति स पत्नी पूज्यते मङ्गळार्थिभिः ॥ ६०६ ॥

अथ भर्ता यथाशास्त्रं वह्न्युपस्थानमाचरेत् ।
तथा कालोचितं सर्वं कुर्यात्तत्र विधिपूर्वकम् ॥ ६०७ ॥

ब्राह्मणान्भोजयेद्बन्धून्स्त्रियश्चाऽपि विशेषतः ।
तेभ्यो दद्याच्च तांबूलं फलं चैव सदक्षिणम् ॥ ६०८ ॥

इति सीमन्तकर्म स्यात्कर्तृशुद्ध्यर्थकं परम्
कर्मणाऽनेन गर्भस्य कर्तृत्वं स्याद्विभूतिमत् ॥ ६०९ ॥

शुद्धैः सव्यं विशेषेण चेति कल्पविदो विदुः ।
ततश्च गर्भाधानं हि त्रिविधं चेति निर्णयः ॥ ६१० ॥

एवं प्रथमसंस्कारप्रथमाङ्गं विशेषतः ।
वर्णितं स्याद्यथातत्त्वं शृण्वन्तु मुनिपुङ्गवाः ॥ ६११ ॥

अथ प्रथमसंस्कारे द्वितीयं तादिदं भवेत् ।
अङ्गं च जननं नाम तच्चैवं हि निगद्यते ॥ ६१२ ॥

जातस्यैव हि गर्भस्य समयं वीक्ष्य तत्त्वतः ।
तेजसे यशसे चैव वर्चसे च यथाविधि ॥ ६१३ ॥

दीर्घायुष्याय वीर्याय विभूत्यै च तथैव हि ।
क्रियते यच्च तद्धि स्याज्जननं चाङ्गलक्षणम् ॥ ६१४ ॥

जननं चेति यच्च स्याज्जातकर्मेति तद्भवेत् ।
तदित्थं चोच्यते शुद्धकल्पकारैर्महर्षिभिः ॥ ६१५ ॥

जातस्यैकादशे चैव दिने शुद्धे पिता स्वयम् ।
प्रातश्चैव क्षौरकर्म कारयेच्छुद्धिलक्षणम् ॥ ६१६ ॥

ततः स्नात्वा यथाकामं पूतांबरधरः शुचिः ।
सह मात्रा च जातं च स्नापयेच्च यथासुखम् ॥ ६१७ ॥

यथा चारं च तिलकं धृत्वा शुभविभूषणः ।
पत्नीं जातं च विधिवदलङ्कुर्याद्विशेषतः ॥ ६१८ ॥

१तद्गर्भजननस्थानं शोधयेच्च तथैव हि ।
अलङ्कुर्याद्यथाकल्पं स्थानं तच्च विशेषतः ॥ ६१९ ॥

एवं कृत्वा ततश्चैव पिता चाऽऽचम्य २मन्त्रतः ।
मण्डपं प्रविशेत्साकं बन्धुभिर्द्विजसत्तमैः ॥ ६२० ॥

ततः पवित्रपाणिश्च वृद्धैश्चैव पुरोहितैः ।
अनुज्ञातो विशेषेण पिता च स्वयमेव हि ॥ ६२१ ॥

प्राणानायम्य सङ्कल्पं सात्त्विकत्यागपूर्वकम् ।
यथाविधि विधायाथ जातकर्म समाचरेत् ॥ ६२२ ॥

आदौ विघ्नेशपूजां च यथाविधि विधाय हि ।
शूर्पस्थं तं च वै जातं ३ समन्त्रं च परामृशेत् ॥ ६२३ ॥

ततः ४ समन्त्रकं चैव स्थलशुद्धिस्तथैव हि ।
५अन्येषां च पदार्थानां पित्रोर्जातस्य वै पुनः ॥ ६२४ ॥

१. गर्भजननस्थानमिति—सूतिकागृहमित्यर्थः । २. मन्त्रत इति—ओं-श्रीं-ह्रीं-नमः, इति मन्त्रेणेत्यर्थः । ३. समन्त्रमिति—ओं-सौः-ह्रीं-श्रीं-नमः, इति मन्त्रमुच्चार्येत्यर्थः । ४. समन्त्रकमिति—ओं-ह्रिं-वं-श्रीं-नमः, इति मन्त्रमुच्चार्येत्यर्थः । ५. अन्येषामिति-सूतिकागृहप्रविष्टपदार्थानामित्यर्थः ।

१पुण्याहकर्मणा कार्या शुद्धिरित्येव निर्णयः ।
वृद्धः पुरोहितश्च स्यात्कर्ता पुण्याहकर्मणि ॥ ६२५ ॥

अथ शुद्धः पिता चैव ह्याचम्य च यथाविधि ।
प्राणानायम्य सङ्कल्पं सात्विकत्यागपूर्वकम् ॥ ६२६ ॥

कृत्वा२ऽङ्कारोहणं चैव जातस्य हि समाचरेत् ।
आधायाऽङ्के तु जातं च तं ३मन्त्रेणाऽभिमन्त्रयेत् ॥ ६२७ ॥

ततो मूर्धन्यवघ्राणं जातस्य पितरौ स्वयम् ।
कुरुतां ४मन्त्रपूर्वं हि यथाविधि यथाक्रमम् ॥ ६२८ ॥

ततश्चैवं पिताऽऽचम्य प्राणानायम्य धर्मतः ।
सात्विकत्यागपूर्वं च कृत्वा सङ्कल्पमेव च ॥ ६२९ ॥

जातस्य दक्षिणे कर्णे जन्मताराजपः पुनः ।
भवेत्पित्रा च कार्यश्चेत्युक्तं पूर्वैर्महर्षिभिः ॥ ६३० ॥

ततो यथासुखं चैव जातमङ्काच्च भूतले ।
निदध्या५न्मन्त्रपूर्वं हि ततश्चैवं पुनर्जपेत् ॥ ६३१ ॥

१. पुण्याहकर्मणेति-पुण्याहवाचनकर्मणेत्यर्थः । २. अङ्कारोहणमिति—उत्सङ्गसंस्थापनमित्यर्थः । ३. मन्त्रेणेति—ओं-ह्रीं-श्लीं सौः हिं नमः, इति मन्त्रेणेत्यर्थः । ४. मन्त्रपूर्वमिति—ओं श्रीं सौः स्वाहा, इति मन्त्रमुच्चार्येत्यर्थः । ५. मन्त्रपूर्वमिति—ओं ह्रीं श्रीं सौः, वसुन्धरे देवि जातं मेऽभिरक्ष स्वाहा, इति मन्त्रमुच्चार्येत्यर्थः ।

जन्मनक्षत्रमेवं हि जपेन्माताऽपि सुव्रता ।
तथा पुरोहितेनैव जपः कार्य इतीर्यते ॥ ६३२ ॥

ततश्चाऽऽप्र उपस्पृश्य प्राङ्मुखश्च पिता पुनः ।
कृत्वा साङ्गं च सङ्कल्पं शान्तिकर्म समाचरेत् ॥ ६३३ ॥

इदं हि सर्वजातानां बालारिष्टस्य शान्तये ।
कर्तव्यं स्यादिति प्रोक्तं पुरा हि भृगुसूनुना ॥ ६३४ ॥

१ तन्त्राग्निं संप्रतिष्ठाप्य तस्मिंश्च श्वेतसर्षपान् ।
२ फलीकरणमिश्रांश्च जुहुयात्३न्मन्त्रपूर्वकम् । ६३५ ॥

चतुर्विंशतिः संख्या च होमकर्मणि गण्यते ।
तथा चार्कसमिद्भिश्च होमः कार्य इतीर्यते ॥ ६३६ ॥

ततो यथाविधानं च वह्न्युपस्थानमाचरेत् ।
ततः सदस्यपूजां च कृत्वा तेभ्यो ह्यनुग्रहम् ॥ ६३७ ॥

प्राप्य जातस्य ४ मन्त्रेण नाम शुद्धं विनिर्दिशेत् ।
जातस्वरूपानुरूपं स्यान्नामकरणं वरम् ॥ ६३८ ॥

तन्नामलक्षणं चैव द्व्यक्षरं चतुरक्षरम् ।
प्रशस्तं भवतीत्येव सिद्धान्तः शुद्धसंमतः ॥ ६३९ ॥

१. तन्त्राग्निमिति—अमन्त्रकं क्रियमाणमग्निसन्धानमित्यर्थः । २. फलीकरणमिश्रानिति—धान्यावघातजनिततुषमिश्रानित्यर्थः । ३. मन्त्रपूर्वकमिति—ओं-श्रीं-ह्रीं-सौः-ओं-नमः स्वाहा, इति मन्त्रमुच्चार्येत्यर्थः । ४. मन्त्रेणेति—ओं-ह्रीं-श्रीं-नमः, इति मन्त्रेणेत्यर्थः ।

ततश्चाप उपस्पृश्य तत्प्राणायामपूर्वकम् ।
सात्विकत्यागपूर्वं च सङ्कल्पं संविधाय च ॥ ६४० ॥

[1]माधवेन च सूक्तेन ह्यभिमन्त्र्य च माक्षिकम् ।
मधु शर्करयोपेतं चूतपत्रे यथाविधि ॥ ६४१ ॥

हिरण्मयेन खण्डेन तदादाय [2]समन्त्रकम् ।
लेपयेज्जातजिह्वायां स्वस्तिकामः पिता स्वयम् ॥ ६४२ ॥

अथाऽऽशीर्वचनं चैव प्राप्य सद्भ्यो विशेषतः ।
ब्राह्मणान्भोजयेद्बन्धून्भोजनान्ते विशेषतः ॥ ६४३ ॥

सदक्षिणाकं तांबूलं दद्यात्सफलमेव च ।
इत्थं जननमङ्गं हि विधिवच्च निरूपितम् ॥ ६४४ ॥

अथ प्रथमसंस्कारं तृतीयं तदिदं भवेत् ।
मन्त्रान्नप्राशनं चैवं वर्ण्यते शुद्धयोगिभिः ॥ ६४५ ॥

तच्च वै विहितं पूर्वैः कल्पकारैर्महर्षिभिः ।
आरोग्यं हि फलं तस्य नियतं स्यादितीर्यते ॥ ६४६ ॥

इदं स्वाभाविकमपि यद्यपि स्याच्च देहिनाम् ।
तथाऽप्यन्नस्य भूतानां रक्षकस्य विशेषतः ॥ ६४७ ॥

१. माधवेन इति—वैष्णवेनेत्यर्थः । तथा च पुरुषसूक्तेन इति भावः
२. समन्त्रकमिति-ओं-ऐं-श्रीं-ह्रीं-शारदायै नमः, इति मन्त्रमुच्चार्येत्यर्थः ।

शुद्धयेऽन्नप्राशनाङ्गं नियतं स्यादितीर्यते ।
अन्नशुद्धिश्च भूतानां बलप्राणप्रदायिनी ॥ ६४८ ॥

शुद्धान्नप्राशनानां च विद्याभ्यासः प्रशस्यते ।
अशुद्धान्नप्राशनानां सोऽयं हि विफलो भवेत् ॥ ६४९ ॥

अन्नमूलाश्च सर्वेऽपि व्यवसायाश्च देहिनाम् ।
संभवन्तीति सिद्धान्तः पुराशङ्करभाषितः ॥ ६५० ॥

अद्यतेऽत्ति च भूतानि तस्मादन्नं तदुच्यते ।
अत एव हि भूतानामन्नं च जनकं भवेत् ॥ ६५१ ॥

इत्थमन्नप्राशनाख्यं कर्म वै विहितं भवेत् ।
पितृभ्यां तच्च कार्यं स्यादित्याहुः पूर्वसूरिणः ॥ ६५२ ॥

सप्तमे चाष्टमे वापि मासि जातस्य धर्मतः ।
तथा संवत्सरान्ते च तच्च कार्यमितीर्यते ॥ ६५३ ॥

सुस्नातौ पितरौ चैव विशुद्धवसनौ तथा ।
प्रथमं मङ्गळस्नानं जातस्यैव हि कारयेत् ॥ ६५४ ॥

अथाऽऽचम्य पिता चैव सपवित्रकरः शुचिः ।
प्राणानायम्य सङ्कल्पं सात्विकत्यागपूर्वकम् ॥ ६५५ ॥

कृत्वा हि ब्राह्मणेभ्यश्च ह्यनुज्ञां प्राप्य धर्मतः ।
कुर्यादन्नप्रतिष्ठां च यथाविधि समाचरेत् ॥ ६५६ ॥

विघ्नेश्वरस्य पूजां च प्रथमं हि विधाय च ।
तदन्नस्य प्रतिष्ठां च कुर्यादित्येव निर्णयः ॥ ६५७ ॥

प्राङ्मुखांश्चतुरो दर्भान्निधाय च १समन्त्रकम् ।
तथैव कदलीपत्रं साग्रं तेषु विनिक्षिपेत् ॥ ६५८ ॥

तत्र वै मधु गव्यं च घृतं दधि च शर्करा ।
निदध्यात्साकमन्नेन क्षीरपक्वेन च स्वयम् ॥ ६५९ ॥

ततस्तदन्नसंस्कारः कार्यो २मन्त्रेण धर्मतः ।
ततस्तत्संस्कृतान्नं च प्राशयेज्जातस्यदरात् ॥ ६६० ॥

यथाक्रमं यथाशास्त्रं तदन्नप्राशनं भवेत् ।
अथाशीर्वचनं प्राप्य बन्धुभ्योऽपि विशेषतः ॥ ६६१ ॥

ब्राह्मणांश्च तथाबन्धूनन्यांश्चैव विशेषतः ।
भोजयेच्च यथाशास्त्रं तेभ्यश्चैव यथाक्रमम् ॥ ६६२ ॥

सदक्षिणाकं तांबूलं दद्याच्च प्रीतमानसः ।
पुष्पस्रजश्च सर्वेभ्यो दद्यादित्याह वामनः ॥ ६६३ ॥

जातभुक्तावशिष्टं च यदन्नमभिवर्णितम् ।
तच्च देयं गवे साक्षाज्जातस्य ३विधिपूर्वकम् ॥ ६६४ ॥

ततो यथोचितं सर्वं यथाविधि समाचरेत् ।
इत्यन्नप्राशनं कर्म व्याख्यातं मुनिपुङ्गवाः ॥ ६६५ ॥

१. समन्त्रकमिति—ओं-सौः-अमृताधिदेवते स्वाहा, इति मन्त्रमुच्चार्येत्यर्थः । २. मन्त्रेणेति-ओं-सौः-स्वाहा, इति मन्त्रेणेत्यर्थः । ३. विधिपूर्वकमिति—गोपूजापूर्वकमित्यर्थः । पूजा चात्र स्नानालङ्कारादिरूपा भवति ।

एवं प्रथमसंस्कारस्याङ्गानि च यथाक्रमम्।
कर्मसंस्काररूपाणि त्रीणि स्युरुदितानि च ॥ ६६६ ॥

इत्थमत्रं हि विज्ञेयं रहस्यं मुनिपुङ्गवैः।
नारदाद्यैर्योगिभिश्च व्याख्यातं सिद्धमण्डले ॥ ६६७ ॥

प्रथमस्य हि संस्कारस्याङ्गैश्चैव त्रिभिः पुनः।
स्त्री वा पुमान्वा तत्सर्वं भवेत्कौमारलक्षणम् ॥ ६६८ ॥

तथाकौमारानुरूपा शक्तिः शुद्धा च वर्धते।
स्वातन्त्र्यं सर्वकार्येषु यया हि भजते पुमान् ॥ ६६९ ॥

सर्वेषां प्राणिनां चैव स्वात्मज्ञानं महर्षयः।
यथाकालं यथाऽवस्थं यच्चाऽऽत्मशक्तिकारणम् ॥ ६७० ॥

तच्च संस्कारादेवस्यादित्यतोऽसौ विधीयते।
यथाकालं यथादेशं धर्मज्ञैर्मुनिसत्तमैः ॥ ६७१ ॥

तदात्मव्यवसायानां त्रयाणां च महर्षयः।
चतुर्णां वा विशेषेण प्राशस्त्यं सर्वसंमतम् ॥ ६७२ ॥

यथादेशं यथाकालं यथावस्थं च योगिनः।
स्वात्मस्वरूपविज्ञानाद्भवेदित्येव निर्णयः ॥ ६७३ ॥

स्वात्मस्वरूपविज्ञानाद्यथावस्थं यथाजनि।
सर्वेषां देहिनां चैव शक्तिः स्वातन्त्र्यदायिनी ॥ ६७४ ॥

संवर्धिता भवेच्चेति कथितं यज्ञसूनुना।
यज्ञसूनुश्च भगवान्भवेत्स्कन्दः सनातनः ॥ ६७५ ॥

इत्यतः प्रथमाच्चैव संस्काराज्जायते परा।
शक्तिः कौमाराऽनुरूपा देहिनामिति चोच्यते ॥ ६७६ ॥

अथ प्रथमसंस्कारं व्याख्यास्याम्यङ्गिलक्षणम्।
तद्विद्याभ्यासकर्माङ्गं स विज्ञेयो महर्षिभिः ॥ ६७७ ॥

यदस्ति विद्याभ्यासाख्यं कर्म तत्त्रिविधं भवेत्।
तथा तस्य च संस्कारस्त्रिविधश्चेति कीर्तितः ॥ ६७८ ॥

प्राकृतो यश्च संस्कारो विद्याभ्यासाख्यकर्मणः।
सोऽयमित्थं हि विज्ञेयो भवेच्च मुनिपुङ्गवैः ॥ ६७९ ॥

सचाऽपि त्रिविधश्चैव दृश्यते हि स्वभावतः।
तस्माच्छुद्धादिभेदश्च संस्कारेऽस्मिन्निति स्थितिः ॥ ६८० ॥

तत्राऽस्ति प्रथमश्चैव ह्यक्षराभ्यासकर्मणः।
संस्कारो यश्च सोऽयं हि कुमारीणां तथैव च ॥ ६८१ ॥

कुमाराणां वत्सरे च पञ्चमे विहितो भवेत्।
अयं प्राकृतशुद्धश्च संस्कारः स्यादितीर्यते ॥ ६८२ ॥

धर्माभ्यासो द्वितीयः स्यात्सोयमात्मीयलक्षणः।
सर्वेषां देहिनां चैव विहितोऽब्दे च सप्तमे ॥ ६८३ ॥

ततोऽर्थविद्याभ्यासश्च तृतीयोऽभिहितः स च।
द्वादशेऽब्दे च सर्वेषां विहितश्चेति निर्णयः ॥ ६८४ ॥

इति तस्माच्च सर्वेषां विद्याभ्यासाख्यकर्मणाम्।
प्राकृतास्त्रिविधाश्चैव संस्कारा विहिताऽभवन् ॥ ६८५ ॥

एषु सर्वेषु पितरौ संस्कर्तारौ तथा मतौ ।
बान्धवाश्च कुमाराणां संस्कर्तारो भवन्ति च ॥ ६८६ ॥

देहिनां चैव सर्वेषां शुद्धपुष्टवपुष्मताम् ।
विस्फष्टवचनानां च सुखदुःखमनीषिणाम् ॥ ६८७ ॥

संस्कारः प्रथमः सोऽयं विहितो धर्मगामिभिः ।
प्राकृतश्चेति सिद्धान्तः शुद्धाचार्यानुमोदितः ॥ ६८८ ॥

प्राकृता ये च संस्कारास्ते च स्युर्मन्त्रवर्जिताः ।
केवलं कर्मरूपास्ते भवेयुरिति शङ्करः ॥ ६८९ ॥

ये तु मन्त्राश्च पूजायां संस्कारेऽस्मिंश्च चोदिताः ।
पितृभ्यां ते समुच्चार्या भवेयुरिति निर्णयः ॥ ६९० ॥

संस्कारेऽस्मिंश्च पूजासु ये च मन्त्रा महर्षयः ।
यथाधिकारं ते चाऽपि विहिताः स्युर्महर्षिभिः ॥ ६९१ ॥

स्त्री वा पुमान्वा यच्चान्यत्प्राणिजातं च तत्त्वतः ।
तेषामपि च सर्वेषां संस्कारः प्रथमो भवेत् ॥ ६९२ ॥

तस्मादेव हि सर्वेषां विद्याध्ययनमेव च ।
प्रथमं कर्म कर्तव्यमित्याहुः श्रुतयोऽनघाः ॥ ६९३ ॥

विद्याभ्यासाख्यकर्माङ्गः संस्कारो यश्च कीर्तितः ।
तस्योपनयनं चेति नाम स्यात्कथितं पुरा ॥ ६९४ ॥

इत्थमेवोपनयनशब्दार्थो वर्णितो भवेत् ।
त्रिविधश्चैव शुद्धार्यैर्धर्मकामैर्महर्षिभिः ॥ ६९५ ॥

रम्यां कुलपतेः शालां सद्विद्याग्रहणाय हि।
नयनं देहिनो यद्धि तच्चोपनयनं भवेत् ॥ ६९६ ॥

इदं चैवोपनयनं प्रकृतं स्यादितीर्यते।
सामान्यदर्शनाप्त्यै तच्च वै क्रियते भुवि ॥ ६९७ ॥

वेदवेदाङ्गतत्त्वज्ञगुरोश्चैव कुलं महत्।
साङ्गवेदाध्ययनाय स्वात्मविज्ञानसिद्धये ॥ ६९८ ॥

तथैव हि सदाचारसिद्धये च महर्षयः।
नयनं देहिनो यत्स्यात्तच्चोपनयनं भवेत् ॥ ६९९ ॥

आत्मीयं तदिदं प्रोक्तं द्वितीयं स्यान्महर्षयः।
स्वात्मविज्ञानहेतुत्वात्तश्चेदं समन्त्रकम् ॥ ७०० ॥

विहितं धर्मशास्त्रेषु दृश्यते शुद्धिलक्षणम्।
कर्तारौ चाऽस्य पितरौ भवतां गुरुरेव वा ॥ ७०१ ॥

समधीतार्थशास्त्राणां लोकतन्त्रविदां पुनः।
गुरुभक्तिमतां चैव ह्यास्तिकानां विशेषतः ॥ ७०२ ॥

इदं चैवोपनयनमात्मीयं विहितं भवेत्।
एकोनविंशे चाब्दे च कुमाराणामितीरितम् ॥ ७०३ ॥

एवमुक्तोपनयने द्वे च ये मुनिपुङ्गवाः।
ते शैशवे देहिनां च प्रशस्ते चेति निर्णयः ॥ ७०४ ॥

परं चैव हि संसारं सर्वांश्च व्यवसायिनः।
नेत्रा यत्क्रियते कर्म ब्राह्मोपनयनं च तत् ॥ ७०५ ॥

पूर्तिश्च व्यवसायस्य प्रारब्धस्य च देहिनाम् ।
परसंसारकर्तव्यव्यवसायस्य निश्चयः ॥ ७०६ ॥

येन विज्ञायते तच्च ब्राह्मोपनयनं भवेत् ।
इति तल्लक्षणं चैव सामान्यं समुदीरितम् ॥ ७०७ ॥

विशेषलक्षणं चाऽपि ब्राह्मोपनयनस्य हि ।
अन्यत्र च विशेषेण व्याख्यातं स्यान्महात्मभिः ॥ ७०८ ॥

ऋणत्रयनिवृत्ता ये श्रीमन्तः सुखिनो भुवि ।
ब्राह्मोपनयने चाऽस्मिन्भवेयुरधिकारिणः ॥ ७०९ ॥

न कालनियमश्चाऽस्य विहितो ब्रह्मसूनुना ।
इच्छैव देहिनां चास्य शुद्धा स्याद्धि नियामिका ॥ ७१० ॥

इत्येवमुपनयनशब्दार्थो वर्णितो मया ।
विज्ञेयः स्यात्पितृभ्यां च गुरुणा ब्रह्मचारिणा ॥ ७११ ॥

प्राकृतोपनयनाच्च प्राकृतं कार्यमेव हि ।
तथा प्राकृतविद्याश्च शोभन्ते देहिनां पुनः ॥ ७१२ ॥

आत्मीयोपनयनाच्च स्वात्मज्ञानं परप्रदम् ।
सदाचारो विशुद्धश्च शक्तिः स्वातन्त्र्यलक्षणा ॥ ७१३ ॥

सर्वत्राऽप्रतिहता च विज्ञानं धर्मलक्षणम् ।
सर्वाण्येतानि जायन्ते शोभन्ते च विशेषतः ॥ ७१४ ॥

शुद्धोपनयनाख्याच्च ब्राह्मोपनयनात्पुनः ।
जायते योगशक्तिश्च ब्रह्मसामीप्यदायिनी ॥ ७१५ ॥

तथा हि प्राणिनः सर्वे धीराश्चोर्जस्विनस्तथा ।
भूतिभिः स्वानुरूपाभिर्युक्ताश्चैव विशेषतः ॥ ७१६ ॥

समाः शान्ताश्च पूताश्च सन्यासत्यागलक्षणाः ।
योगतन्त्राः स्वतन्त्राश्च भवन्तीत्याह वामनः ॥ ७१७ ॥

तदस्मिंश्चोपनयने त्रिविधे प्राकृते च हि ।
अक्षराभ्याससंस्कारश्चेत्थं चैव निगद्यते ॥ ७१८ ॥

शोभने दिवसे चैव माधवे मासि वा तथा ।
विजयायां दशम्यां वा पितरौ च यथासुखम् ॥ ७१९ ॥

स्नातौ विशुद्धवस्त्रौ च रम्यभूषणभूषितौ ।
विशेतां बन्धुभिः साकं मण्टपं शुभलक्षणम् ॥ ७२० ॥

साकमेव कुमारेण तथा विद्याधिकारिणा ।
तथा ह्यन्यैः कुमारैश्च युक्तौ विद्यार्थिभिः पुनः ॥ ७२१ ॥

अथाऽऽचार्यैः सदस्यैश्च ह्यनुज्ञातौ च बन्धुभिः ।
अक्षराभ्याससंस्कारं चरेतां विधिपूर्वकम् ॥ ७२२ ॥

प्रथमं मङ्गळस्नानं कुमारस्य च कारयेत् ।
ततः स्वलङ्कृतं चैव कुमारं मङ्गळासने ॥ ७२३ ॥

निवेशयेत्तथा तत्र निविशेतां च दंपती ।
यथाक्रमं चैव ततः पिता चाचम्य १ मन्त्रतः ॥ ७२४ ॥

१. मन्त्रत इति—ओं-ऐं-स्वाहा, इत्याचमनमन्त्रो भवति ।

प्राणानायम्य सङ्कल्पं विधाय च यथाविधि ।
पुण्याहकर्ममाङ्गळ्यं कृत्वा तीर्थेन तेन च ॥ ७२५ ॥

कुमारं प्रोक्षयेच्चाथ पूजयेद्विघ्ननायकम् ।
समन्त्रं च विधानेन ततो देवीं च पूजयेत् ॥ ७२६ ॥

सरस्वती च सा देवी चैवं विद्यार्थिभिः पुनः ।
पूज्या स्यादिति च प्रोक्तं वामनेनैव योगिना ॥ ७२७ ॥

आर्द्रौ कृत्वा तु दर्भाभ्यां द्वाभ्यां कूर्चं यथाविधि ।
तच्चाऽपामार्गदण्डेन रक्तेन च विशेषतः ॥ ७२८ ॥

हरिद्रारञ्जितेनैव सूत्रेणाऽऽबध्य धर्मतः ।
पीठचक्रे न्यसेत्तच्च प्राचीनाग्रं यथाविधि ॥ ७२९ ॥

हरिद्राचूर्णमिश्रैश्च तण्डुलैः संप्रपूरितम् ।
शरावं मृण्मयं शुद्धं यच्च मङ्गळलक्षणम् ॥ ७३० ॥

तच्च वै पीठचक्रं स्यात्पूज्यं विद्यार्थिभिः पुनः ।
स्याद्दर्भेषु प्रागग्रेषु चतुर्षु स्थापितं च तत् ॥ ७३१ ॥

इत्थमुक्ते च कूर्चेऽस्मिन्प्राणायामादिपूर्वकम् ।
आवाहयेच्च मन्त्रेण देवीं विद्याधिदेवताम् ॥ ७३२ ॥

"ओं ऐं श्रीं ह्रीं जगन्मातः सर्वलोकेश्वरेश्वरि ।
संसेव्ये शैशवे सर्वैः प्रथमव्यवसायिभिः ॥ ७३३ ॥

विद्याप्रथमपादाद्ये ब्रह्मण्ये ब्रह्मचारिणि ।
ज्ञानमुद्रे ज्ञानपीठे ज्ञानेश्वरि सरस्वति ॥ ७३४ ॥

ओं श्रीं ऐं ह्रूीं ब्रह्मविद्ये सर्वदर्शनदेवते ।
योगेश्वरि महादेवि कूर्चेऽस्मिन्सन्निधिं कुरु" ॥ ७३५ ॥

इत्यावाहनस्य मन्त्रः कथितो ब्रह्मसूनुना ।
आवाहनात्पराः पूजाः सर्वाश्चाऽपि विशेषतः ॥ ७३६ ॥

१ आद्यैर्बीजैश्चतुर्भिश्च नमोऽन्तैश्चैव कारयेत् ।
२ अन्त्यबीजैश्चतुर्भिस्तु नमोऽन्तैर्वा प्रपूजयेत् ॥ ७३७ ॥

पूजोपयुक्तपुष्पाद्यैः कुमारं चाऽपि भूषयेत् ।
ततः षाष्टिकबीजैश्च चतुरस्रं च मण्डलम् ॥ ७३८ ॥

विधाय च विधानेन तत्र वै मङ्गळासनम् ।
संस्थाप्य च कुमारं हि तस्मिन्नेवोपवशयेत् ॥ ७३९ ॥

प्रशङ्खं च तदा वाद्यं वादयेन्मङ्गळार्थकम् ।
गानं सुमङ्गलीभिश्च कारयेदथ वै पिता ॥ ७४० ॥

सुखासीनकुमाराय दिव्यवर्णावळिं पुनः ।
मुदा ह्युपदिशेत्सम्यगीश्वरध्यानपूर्वकम् ॥ ७४१ ॥

यथाक्रमं यथाधर्मं साकं विद्याधिकारिभिः ।
ततः कुमारस्य पुरो धान्यराशिं विधाय हि ॥ ७४२ ॥

---

१. आद्यबीजैरित्यत्र, ओं-ऐं-श्रीं-ह्रूीं-नमः, इति आवाहनमन्त्रो भवति ।
२. अन्त्यबीजैरित्यत्र, ओं-श्रीं-ऐं-ह्रूीं-नमः, इति आवाहनमन्त्रो भवति ।

समास्तीर्य विधानेन कुमारेण च तत्र हि।
१ यथाक्रमं लेखयेच्च वर्णान्माहेश्वरान्पिता॥ ७४३॥

त्रिधा हि लेखनमपि विहितं ब्रह्मसूनुना।
अथाऽऽशीर्वचनं प्राप्य सदस्येभ्यो विशेषतः॥ ७४४॥

विद्याधिकारिणा साकं कुमारं २कारकोज्ज्वलम्।
कल्याणवाद्यघोषेण रम्यं गुरुकुलं नयेत्॥ ७४५॥

एकयाममितं कालं तत्र स्थित्वा ३यथाविधि।
समाविशेद्गृहं सर्वैर्बन्धुभिः सह वै पिता॥ ७४६॥

सर्वानिमान्यथाशास्त्रं भोजयेदथ धर्मतः।
तेभ्यो दद्याच्च तांबूलं प्रीत्यै देव्या महर्षयः॥ ७४७॥

इत्येवमक्षराभ्याससंस्कारो विहितः पुरा।
प्राकृतः प्रथमश्चैव व्याख्यातः स्याद्यथाविधि॥ ७४८॥

एवमेव द्वितीयश्च संस्कारः प्राकृतश्चयः।
सोऽयं भवेत्स चाऽपि स्याद्धर्माभ्यासस्वरूपभाक्। ७४९॥

१. यथाक्रममिति—"अ इ उ ण्" इत्यादिचतुर्दशसु माहेश्वरसूत्रेषु च यथा वा वर्णानां क्रमः परिदृश्यते, तथैव क्रमेण वर्णान्विलेखयेत्, इत्यर्थः। अथ पठनाभ्यासे च वर्णानां अकारादिक्षकारान्तः क्रमश्च लौकिको विज्ञेयो भवति, इति वामनः। २. कारकोज्ज्वलमिति-अक्षराभ्यासयोग्ये लेखिनीफलके च कारक-शब्देन गृह्येते, इति भावः। ३. यथाविधि, इति यथादेशं यथाकालं च कर्तव्य-विध्यनुरूपेणेत्यर्थः।

अर्थाभ्यासस्वरूपः स्यात्तृतीयः प्राकृतश्च यः ।
सोऽयं तथैव हि परः कार्य इत्येव निर्णयः ॥ ७५० ॥

विशेषनियमश्चेत्थं ह्यनयोस्तु निगद्यते ।
धान्यासनं तथाधान्यलेखनं नाऽत्र कथ्यते ॥ ७५१ ॥

सपुस्तकं पीठचक्रं देव्याश्चावाहनाय हि ।
विहितं स्याद्द्वयोश्चैव ह्यनयोरिति निर्णयः ॥ ७५२ ॥

अपरौ यौ च संस्कारौ कार्यौ गुरुकुले च तौ ।
अनेनैव विधानेन चेति नारदभाषितम् ॥ ७५३ ॥

इत्येवं प्राकृताः प्रोक्ताः संस्कारास्त्रिविधाश्च ते ।
सरहस्यं हि विज्ञेयाः सर्वैश्चैत्राऽधिकारिभिः ॥ ७५४ ॥

ततो द्वितीयः संस्कारो ह्यात्मीयो ज्ञानलक्षणः ।
यश्च सोऽयं भवेदेवं व्याख्यातो ब्रह्मसूनुना ॥ ७५५ ॥

शोभने दिवसे चैव काले वासन्तिके पुनः ।
तदात्मीयोपनयनं कुमाराणां विधीयते ॥ ७५६ ॥

स्नातौ स्वलंकृतौ चैव दंपती धर्मभाजनौ ।
वेदविद्भिर्महद्भिश्च बन्धुभिश्च विशेषतः ॥ ७५७ ॥

भूषितं मङ्गलद्रव्यैः सर्वतः समलङ्कृतम् ।
कल्याणैर्वाद्यघोषैश्च पर्याप्तं च सुवासितम् ॥ ७५८ ॥

मण्डपं च कुमारेण प्रविशेतां यथासुखम् ।
तत्रैव वाद्यघोषं च विशेषेण च कारयेत् ॥ ७५९ ॥

अथाचम्य पिता शुद्धः सपवित्रकरः स्वयम् ।
साकं पत्न्या कुमारेण सदस्येभ्यो यथाविधि ॥ ७६० ॥

प्रणम्य प्राङ्मुखस्तिष्ठन्भक्त्या बद्धाञ्जलिः पुनः ।
कर्तव्यं कर्म चैवं हि प्रार्थयेच्छुद्धमानसः ॥ ७६१ ॥

"ओं नमो नारायणाय देवाय परमात्मने ।
शुद्धार्यवृन्दसेव्याय लोकनाथाय ते नमः ॥ ७६२ ॥

ओं नमो ज्ञानसंस्कारगुरवे ब्रह्मरूपिणे ।
सर्वाचार्यस्वरूपाय दक्षिणामूर्तये नमः ॥ ७६३ ॥

ओं नमः पूर्णकामेभ्यो देवेभ्यो ह्रीं नमो नमः ।
ओं ह्रीं नमश्चरेभ्यः श्रीं सिद्धेभ्यो हं नमो नमः ॥ ७६४ ॥

ओं नमो ह्रीं महर्षिभ्यो ब्राह्मणेभ्यो नमो नमः ॥
सदार्येभ्यो महद्भ्यश्च सदस्येभ्यो नमो नमः ॥ ७६५ ॥

आत्मोपनयनाख्येन चाष्टाङ्गेन यथाबलम् ।
संस्कारेण कुमारं मे संस्करिष्यामि सादरम् ॥ ७६६ ॥

अनुगृण्हन्तु मां सर्वे कुमारं धर्मवत्सलम् ।
कुमारस्यात्मशक्तिश्च प्रसादाद्वोऽभिवर्धताम्" ॥ ७६७ ॥

इति स्तुत्वा चोपविश्य कुमारेण सह स्वयम् ।
प्राणानायम्य सङ्कल्पं सात्त्विकत्यागपूर्वकम् ॥ ७६८ ॥

कृत्वा विघ्नेशपूजां च यथाशास्त्रं समाचरेत् ।
ततश्चैव सदस्येभ्योऽनुज्ञां प्राप्य पिता स्वयम् ॥ ७६९ ॥

कुमारं मन्त्रपूतेन तीर्थेन ब्राह्मणैः सह।
प्रोक्षयेच्चाथ विधिवत्कुमारस्य महर्षयः॥ ७७०॥

आत्मीयोपनयनाङ्गं प्रथमं क्षुरकर्म च।
माङ्गल्यं कारयेत्तच्च प्रोक्तं स्यादेवमेव हि॥ ७७१॥

शिखायाः कल्पनं यच्च यथादेशं यथाकुलम्।
कुमारस्य यथाशास्त्रं भवेत्तत्क्षुरकर्म च॥ ७७२॥

शिष्टेन नापितेनैव कुलाचारविदा तथा।
कार्यं तच्चेति सिद्धान्तः कथितो ब्रह्मसूनुना॥ ७७३॥

मात्रा सोष्णोदकं पात्रं करे धार्यं भवेत्तथा।
कुमारस्य शिरस्तेन चोदकेन पिता स्वयम्॥ ७७४॥

क्लेदयेच्च समन्त्रं हि यथासुखमतन्द्रितः।
ततश्च नापितेनैव क्षुरकर्म समाचरेत्॥ ७७५॥

शकृत्पिण्डे चानडुह विशुद्धे च यवान्विते।
कृत्तकेशान्निधायाथ सर्वमेतच्च तत्पिता॥ ७७६॥

पुण्यवृक्षस्य मूले च स्थापयेद्विधिपूर्वकम्।
इति चाथ कुमारं तु स्नापयेन्मन्त्रवारिणा॥ ७७७॥

कर्मण्यस्मिंश्च सर्वत्र मन्त्रश्चैवं निगद्यते।
१ प्रणवं पूर्वमुच्चार्य श्रीं बीजं च ततः परम्॥ ७७८॥

---

१ प्रणवमिति-ओं-श्रीं-सौः-देवदत्तशर्मणे दीर्घायुष्यं देहि स्वाहा, इति मन्त्रस्वरूपं भवति।

ततश्चामृतबीजं च चतुर्थ्यन्तं हि नाम च।
कुमारस्य ततो दीर्घमायुष्यं देहि स्वाहेति ॥ ७७९ ॥

वदेदिति च तेनैव कार्यं स्यात्क्षुरकर्म च।
अथोपनयनस्याऽस्य द्वितीयं चाङ्गमुच्यते ॥ ७८० ॥

तदित्थं वर्ण्यते शुद्धैर्नारदाद्यैर्महर्षिभिः।
तच्च साधनसंस्कार इति नाम्ना निगद्यते ॥ ७८१ ॥

आचम्य च पिताऽऽचार्यः सपवित्रकरः शुचिः।
प्राणानायम्य सङ्कल्पं सात्त्विकत्यागपूर्वकम् ॥ ७८२ ॥

अलङ्कृतकुमारेण सह तिष्ठन्प्रणम्य च।
ऋत्विक्भ्यो ब्राह्मणेभ्यश्च प्राप्याऽनुज्ञां विशेषतः ॥ ७८३ ॥

पुण्याहवाचनं कर्म वेदोक्तं च यथाविधि।
कुर्यात्ततः प्रोक्षयेच्च यज्ञद्रव्याणि सादरम् ॥ ७८४ ॥

अथ चैवाग्निसन्धानं यथाविधि विधाय च।
आचम्याऽऽग्नेरुत्तरस्यां दिशि चैव ह्यलङ्कृतम् ॥ ७८५ ॥

दर्भासने द्दषत्पुत्रं यथाविधि निधापयेत्।
तस्मिन्वासश्च नूत्नं हि हरिद्राक्तं तथैव हि ॥ ७८६ ॥

मौञ्जीं च मेखलां रम्यां यज्ञसूत्रं तथैव हि।
कृष्णाऽजिनं च दण्डं च निदध्याद्विधिपूर्वकम् ॥ ७८७ ॥

निहितं सर्वमेतच्च द्दषत्पुत्रे महर्षयः।
निमन्त्रितैरष्टभिश्च ब्राह्मणैः सह धर्मवित् ॥ ७८८ ॥

पिता च यजमानश्च संस्कुर्याच्च यथाविधि ।
संस्कारयोग्यमन्त्रा ये ते चेत्थमभिवर्णिताः ॥ ७८९ ॥

युक्ता व्याहृतिभिश्चैव गायत्री त्रिपदा च सा ।
साष्टाक्षरा च सूक्तानि पुरुषस्य तथा श्रियः ॥ ७९० ॥

तथा वारुणसूक्तं च भूसूक्तमिति निर्णयः ।
संस्कृतं सर्वमेतच्च पिता पुत्रं च धारयेत् ॥ ७९१ ॥

यथाक्रमं समन्त्रं च वृद्धेभ्यः प्राप्य चाशिषः ।
पञ्चानां संस्कृतानां च धारणे तु महर्षयः ॥ ७९२ ॥

वेदोक्ता ह्येव मन्त्राश्च प्रयोज्याः स्युरितीर्यते ।
महर्षिणा शङ्करेण कल्पशास्त्रविदा पुनः ॥ ७९३ ॥

अष्टाक्षरान्तपादा च गायत्री प्रणवोज्वला ।
प्रयोक्तव्येति भगवानाह नारायणो मुनिः ॥ ७९४ ॥

एवं वस्त्रादिभिश्चैव पञ्चभिर्भूषितो वटुः ।
सदस्येभ्यो नमस्कुर्यात्प्राप्नोतु च तदाशिषः ॥ ७९५ ॥

अथ तृतीयमङ्गं स्याद्बालकैः सह भोजनम् ।
पञ्चामृतस्य शुद्धस्य संस्कृतस्य विशेषतः ॥ ७९६ ॥

सगुडं सघृतं चैव हरिद्रान्नस्य भोजनम् ।
बालकानां प्रशस्तं स्याद्वटोः पञ्चामृतस्य च ॥ ७९७ ॥

पञ्चामृतस्य संस्कारः सोऽयमित्थं निगद्यते ।
शुद्धसूत्रे यथाशास्त्रं तं च वक्ष्ये महर्षयः ॥ ७९८ ॥

आचम्य च पिता शुद्धः सपवित्रकरः स्वयम् ।
प्राणानायम्य सङ्कल्पं सात्विकत्यागपूर्वकम् ॥ ७९९ ॥

कृत्वा ह्यग्नेश्चोत्तरस्मिन्प्रक्षिप्य चतुरः कुशान् ।
प्रागग्रांश्चाऽथ तत्रैव पात्रं पञ्चामृतान्वितम् ॥ ८०० ॥

स्थापयित्वा यथाशास्त्रं चाष्टभिर्ब्राह्मणैः सह ।
पञ्चामृतं च मन्त्रेण संस्कुर्याच्च यथाविधि ॥ ८०१ ॥

मधुसूक्तं च संस्कारे प्रयोक्तव्यमितीर्यते ।
अथ वा च्यामृतं बीजं १साङ्गं चैव प्रयोजयेत् ॥ ८०२ ॥

इत्येवं संस्कृतं चैव वटुं पञ्चामृतं च तत् ।
प्राशयेच्च समन्त्रं हि मन्त्रश्चाष्टाक्षरो भवेत् ॥ ८०३ ॥

अथोपनयने चास्मिन्तुरीयं चाङ्गमुच्यते ।
सावित्र्याश्चैव गायत्र्या ह्युपदेशोऽत्र गीयते ॥ ८०४ ॥

आत्मीयोपनयनेऽस्मिञ्जीवभूतोऽयमुच्यते ।
सावित्र्याश्चोपदेशः स्यादित्थं ह्यत्राऽभिवर्णितः ॥ ८०५ ॥

ततश्च मधुपर्कस्य भोक्ता श्रीमान्वटुः स्वयम् ।
स्वाचार्येणोपदिष्टश्च द्विधा ह्याचमनं चरेत् ॥ ८०६ ॥

अथ प्रणम्य पितरमुपविष्टं वरासने ।
प्राङ्मुखं च कुमारोऽयं स्वयं तिष्ठन्नुदङ्मुखः ॥ ८०७

---

१. साङ्गमिति—ओं सौः स्वाहा, इत्यर्थः ।

बद्धाञ्जलिपुटश्चैवं प्रार्थयेत्पितरं गुरुम्।
तथैव हि सदस्यांश्च ब्रह्मणांश्च विशेषतः॥ ८०८॥

"सुप्रसन्ना महाभागाः विद्वांसो ब्रह्मवादिनः।
आत्मीयोपनयनेन संस्कारेण यथाविधि॥ ८०९॥

संसारव्यवसाये च शुद्धस्वातन्त्र्यसिद्धये।
प्रपन्नं स्वात्मविज्ञानकामं मां ज्ञानमुद्रया॥ ८१०॥

संस्कुर्वन्तु यथाकामं पन्थानः सन्तु मे शिवाः।
प्रज्ञा मे वर्धतां देवी शरीरं मे विचर्षणम्॥ ८११॥

भूयान्मधुमती जिह्वा भूयाच्चित्तं च मे सुखम्।
अस्माकं श्रीश्च धर्मार्थौ तेजसा ब्रह्मवर्चसा॥ ८१२॥

समुज्वलं दीर्घमायुरेधतां वः प्रसादतः।
विज्ञानं च विवेकश्च भूयान्मे गुरुरेधताम्"॥ ८१३॥

इति चाथ कुमारश्च यज्ञाग्नेर्दक्षिणस्थले।
दर्भासने चोपविशेद्बद्धाञ्जलिरुदङ्मुखः॥ ८१४॥

ततश्चैव पिताऽऽचम्य प्राणानायम्य मन्त्रतः।
सात्त्विकत्यागपूर्वं च सङ्कल्पं च विधाय हि॥ ८१५॥

यज्ञं पुरुषसूक्तेन यथाविधि समाचरेत्।
इत्थमात्ममहायज्ञो वर्ण्यते शुद्धयोगिभिः॥ ८१६॥

आवाहनं ब्रह्मणश्च प्रथमं विधिपूर्वकम्।
कर्तव्यत्वेन विहितं ततो होमो विधीयते॥ ८१७॥

तत्र पुरुषसूक्तेन होमश्च प्रथमो भवेत् ।
ततो व्याहृतिहोमश्च विहितो ब्रह्मसूनुना ॥ ८१८ ॥

सावित्रीमन्त्रहोमश्च ततश्च विहितो भवेत् ।
ततश्च १ देवीबीजैश्च होमश्च विहितो भवेत् ॥ ८१९ ॥

ततः २ पूर्णाहुतिं चैव यथाविधि समाचरेत् ।
ततो वह्नेरुपस्थानं विहितं ब्रह्मसूनुना ॥ ८२० ॥

इति चात्ममहायज्ञं यथाविधि विधाय च ।
अग्नेश्च पश्चिमे भागे प्राङ्मुखश्च पिता भवेत् ॥ ८२१ ॥

कुमारश्चोदङ्मुखः स्यात्साकं च ब्रह्मणा पुनः ।
ततः पिता च सङ्कल्पं सात्विकत्यागपूर्वकम् ॥ ८२२ ॥

यथाविधि विधायाथ सावित्रीं त्रिपदां तथा ।
अष्टाक्षरान्तपादां च व्याहृतित्रयपूर्विकाम् ॥ ८२३ ॥

कुमाराय ह्युपदिशेदीश्वरध्यानपूर्वकम् ।
त्रिधा हि चोपदेशश्च विहितो ब्रह्मसूनुना ॥ ८२४ ॥

ततश्चाचार्यशिष्यौ च पितापुत्रौ यथाविधि ।
जपेतां चात्मभूत्यर्थं ब्रह्मणा चानुशिक्षितौ ॥ ८२५ ॥

---

१. देवीबीजैरिति, ओं ह्रीं श्रीं-क्लीं स्वाहा, इति
२. पूर्णाहुतिरिति, ओं-नमो-नारायणाय देवायस्वाहा, इति भवति ।

इत्युक्तं स्यात्तुरीयाङ्गं चात्मोपनयनस्य हि।
ततः स्यात्पञ्चमं साङ्गं स्ववेदाध्ययनं तथा ॥ ८२६ ॥

षडङ्गस्य च मन्त्राणां बीजानां वरणं च हि।
इत्थं साङ्गस्य वेदस्य वर्ण्यतेऽध्ययनं च तत् ॥ ८२७ ॥

पित्रा संप्रार्थितेनैव ब्रह्मणा विधिपूर्वकम्।
उपदेशश्च कार्यः स्यात्साङ्गवेदस्य धर्मतः ॥ ८२८ ॥

प्रथमं पञ्चशान्तिं च ब्रह्मणा सह वै वटुः।
वदेत्तेनोपदिष्टश्च ततो वेदान्समभ्यसेत् ॥ ८२९ ॥

पुनश्च पञ्चशान्तिं च पठेद्भक्त्या वटुः स्वयम्।
ततस्तद्ब्रह्मचारी च सावित्रीं वेदमातरम् ॥ ८३० ॥

मनसा केवलं भक्त्या पुजयेद्विधिपूर्वकम्।
पूजा सा स्तोत्ररूपा स्यात्तथाचार्यः पिता भवेत् ॥ ८३१ ॥

ब्रह्मा च वेति विज्ञेयं स्तोत्रं तच्चेत्थमुच्यते।
नारदाद्यैश्च पूर्वार्यैश्चण्डभानुपुरोगमैः ॥ ८३२ ॥

"पृथ्व्यग्नी दंपती वन्दे भक्तियुक्तेन चेतसा।
ह्रीं अं बीजस्वरूपौ तौ जगतां नायकौ परौ ॥ ८३३ ॥

वरुणापस्त्वरूपौ यौ दंपती शुद्धलक्षणौ।
ह्रीं अं बीजस्वरूपौ तौ चेतसा नौमि शङ्करौ ॥ ८३४ ॥

गोवायू दंपती शुद्धौ प्राणनाथौ सनातनौ।
ह्रीं अं बीजसमुत्पन्नौ प्रपद्ये तौ महार्थदौ ॥ ८३५ ॥

छन्दोयज्ञस्वरूपौ यौ दंपती कर्मलक्षणौ ।
ह्रीं अं बीजस्वरूपौ तौ चेतसा शरणं भजे ॥ ८३६ ॥

यौ विद्युत्स्तनयित्नू तौ दंपती दीर्घचक्षुषौ ।
ह्रीं अं बीजसमुत्पन्नौ प्रपद्ये ब्रह्मलक्षणौ ॥ ८३७ ॥

अदित्यादित्यरूपौ यौ दंपती लोकनायकौ ।
ह्रीं अं बीजस्वरूपौ तौ चेतसा नौमि सादरम् ॥ ८३८ ॥

ताराचन्द्रमसौ यौ तौ दंपती मानसोज्वलौ ।
ह्रीं अं बीजसमुत्पन्नौ चेतसा शरणं व्रजे ॥ ८३९ ॥

यौ वाङ्मनस्वरूपौ तौ शब्दब्रह्मस्वरूपिणौ ।
ह्रीं अं बीजसमुत्पन्नौ प्रपद्ये बुद्धिसाक्षिणौ ॥ ८४० ॥

शुद्धस्त्रीपुरुषरूपौ जगतां पितरौ परौ ।
ह्रीं अं बीजमाराध्यौ चेतसा भावयाम्यहम् ॥ ८४१ ॥

गायत्रीसवितारौ यौ दंपती धर्ममानसौ ।
शुद्धबीजसमाराध्यौ प्रपद्ये लोकनायकौ" ॥ ८४२ ॥

इत्येवं दशस्तवं च पूजार्थमुपयुज्यते ।
पठेद्भक्त्या ब्रह्मचारी बद्धाञ्चलिपुटः स्वयम् ॥ ८४३ ॥

ततो ब्रह्मा च पूज्यः स्याद्वटुना च यथाविधि ।
ततश्चोत्थापनं कार्यं ब्रह्मणश्चैव पूजया ॥ ८४४ ॥

इत्युक्तं पञ्चमं चाङ्गं ह्यात्मोपनयने भवेत् ।
अथ चेत्थं षष्ठमङ्गं विज्ञेयं स्यान्महर्षिभिः ॥ ८४५ ॥

१ प्राणायामोपदेशश्च बलातिबलयोस्तथा ।
विद्ययोरुपदेशश्च षष्ठेऽङ्गेऽस्मिंश्च चोदितः ॥ ८४६ ॥

सप्तव्याहृतिभिश्चैव सबीजाभिर्यथाबलम् ।
प्राणायामो पदेशश्च विहितो ब्रह्मसूनुना ॥ ८४७ ॥

बलेत्यतिबलत्येव ये विद्ये च निरूपिते ।
तयोः स्वरूपं साङ्गं च ह्युपास्यं ब्रह्मचारिभिः ॥ ८४८ ॥

२वामदेवरहस्येन विज्ञेयमिति निर्णयः ।
इति षष्ठाङ्गकर्म स्यादात्मोपनयनस्य च ॥ ८४९ ॥

१. प्राणायामोपदेश इति, प्राणायामश्चात्र दासाध्याये प्रथमपटले प्रतिपादितो गृह्यते । २. वामदेवरहस्येनेति—इत्थं पुनस्तयोर्विद्ययोः स्वरूपं जपप्रकारश्च विज्ञायते—अस्य श्रीबलादेवीमहामन्त्रस्य आदित्यः ऋषिः, गायत्रीछन्दः, श्रीबलादेवी देवता । श्रैं-बीजम्, ह्रीं शक्तिः, हुं कीलकम् । शारीरश्रमनिवृत्त्यर्थे जपे विनियोगः । श्रां-श्रीं-श्रूं-श्रैं-श्रौं-श्रः, इति षड्भिर्बीजैः षडङ्गन्यासाः कार्याः । इत्थं हि ध्यानं भवति—वन्दे बलां महादेवीं दिव्यामृतकरोज्वलाम् । प्रसन्नवदनांभोजां शारीराऽऽरोग्यसिद्धये ॥ इति । एवं मूलमन्त्रः—तत्सवितुर्वरेणीयं, भर्गो देवस्य धीमहि, धियो यो नः प्रचोदयात्, क्लीं ऐं सौः बलायै नमः ॥ इति । अस्या जपसंख्या च प्रतिदिनमष्टोत्तरशतं

अस्य श्री अतिबलामहामन्त्रस्य, कृशाश्वो भगवानृषिः, गायत्रीछन्दः, अतिबलाऽमृतस्वरूपा देवी देवता । अं बीजम्, उं-शक्तिः, मं-कीलकम् ।

ततश्च सप्तमं ह्यङ्गमात्मोपनयनस्य च।
माणवकेन कार्या च पित्रोः पूजेति तद्भवेत् ॥ ८५० ॥

पितृपूजाप्रकारश्च कथितो ब्रह्मसूनुना।
सोऽयमित्थं हि विज्ञेयो भवेच्छुभैर्महर्षिभिः ॥ ८५१ ॥

प्रथमं पादपूजा च पित्रोर्माणवकेन हि।
अभिषेकपूर्विका च कार्या स्यादिति सोच्यते ॥ ८५२ ॥

ब्रह्मचर्यानुरूपा च शिक्षा या स्याद्यथाविधि।
तस्याश्चैव परिज्ञानमस्यां च विहितं भवेत् ॥ ८५३ ॥

एवं पितृभ्यामन्येभ्यो बन्धुभ्यश्च यथाविधि।
भिक्षाया ग्रहणं चाऽपि यथाचारं महर्षयः ॥ ८५४ ॥

पितृपूजेति कथितं नन्दिदेवेन योगिना।
१आत्मस्तोमत्रयं चाऽपि २नवग्राहोपशोभितम् ॥ ८५५ ।

ममभृत्युनिवृत्त्यर्थे जपे विनियोगः । क्लां क्लीं-क्लूं-क्लैं-क्लौः-क्लः, इति षड्भिर्बीजैः षडङ्गन्यासाः भवन्ति । ध्यानम्—मृतसञ्जीविनीं विद्यां देवीं पद्मासनस्थिताम् । दीर्घायुष्यप्रदां वन्दे मातरं हेममालिनीम् ॥ इति । एवं मूलमन्त्रस्वरूपम्—तत्सवितुर्वरेणीयं, भर्गो देवस्य धीमहि, धियो यो नः प्रचोदयात्. ह्रीं-क्लीं-अतिबले हुं फट् ॥ इति । अस्या जपसंख्या चाष्टोत्तरशतं भवति । इति ।

(१) आत्मस्तोमत्रयमिति—आत्मोपनयनाङ्गभूतं स्तोमत्रयमित्यर्थः त्थमवगम्यते—

प्रदक्षिणप्रणामौ च तथा चैवाभिवादनम् ।
तत्सर्वं पितृपूजेति प्राह दामोदरो मुनिः ॥ ८५६ ॥

व्याख्यातं सर्वमेतच्च पितृपूजेति निर्णयः ।
इत्येवं सप्तमं चाङ्गमात्मोपनयने भवेत् ॥ ८५७ ॥

---

१. पिता—भोः? आत्मविद्यां नु स्वतन्त्रेण न्याय्येन च पथा प्राप्नुयाः?

कुमारः—ओं तथा प्राप्नुयां, सत्यं ब्रवीमि, ओम् ।

२. पिता—भोः? समधीतात्मविद्यश्च स्वाऽनुरूपां च कन्यां धर्मपत्नीं नु कमेथाः?

कुमारः—ओं तथैव कमेय, सत्यं ब्रूवीमि, ओम् ।

३. पिता—भोः? यथातथं वा यथाशक्ति ज्ञानतः जन्मतश्चाऽवराणां समुद्धृतये प्रयत्नपरो नु भवेः? सर्वसमो लोकाभ्युदयचिन्तको नु भवेः? ।

कुमारः—ओं तथावर्ते, सत्यं ब्रवीमि ओम् । इति स्तोमत्रयम् ।

(२) नवग्राहोपशोभितामिति—आत्मोपनयनाङ्गभूतनवग्राहोपलक्षितमित्यर्थः । ते चेत्थमवगम्यते—

१. पिता—कुमार ब्रह्मचारिन्? आर्षगोत्रोऽसि?

कुमारः—तथाऽस्मि ॥

२. पिता—शुद्धाधिकारिभिः संस्कृतोऽसि?

कुमारः—तथा संस्कृतोऽस्मीति प्रमोदे ॥

पिता—सुशिक्षितोऽसि सद्विद्यया?

कुमारः—अनुगृहीतोऽस्मि महद्भिः ॥

**अथात्मीयोपनयने चाष्टमं ह्यङ्गमुच्यते ।**
**तस्य चावभृतं नाम भवेदिति च निर्णयः ॥ ८५८ ॥**

४. पिता—यथास्वरूपं यथाकामं संप्रार्थय ?

कुमारः—कृतकरिष्यमाणसंसारव्यवसायफलभोक्ता शत्रौ मित्रेऽपि समः मानावमानयोः समः, सुखदुःखयोः समः, गुरुतन्त्रः स्वतन्त्रः समस्तविभूतिसंपन्नः, सन्यस्तः शुद्धयोगी सर्वाभ्युदयपरः, ब्रह्मचारी भूयासम्,

पिता—तथाऽस्तु, भगवान् प्रीणातु । अन्यदपि प्रार्थय ?

५. कुमारः—तेजस्वी वर्चस्वी हरस्वी ब्रह्मवर्चस्वी भूयासम्,

पिता—तथाऽस्तु योगदेवी प्रसीदतु ।

६. कुमारः—सर्वाऽधिकारी भूयासम् ?

पिता—तथाऽस्तु महात्मानः प्रसीदन्तु ।

७. कुमारः—भगवन् धर्माननुशाधि ?

पिता—यथाकालं यथादेशं यथारूपं स्वतन्त्रेण हार्देश्वरेणैव शिक्षितो भविष्यसि । परमात्मा प्रसीदतु ।

८. कुमारः—कस्मिन्वाचरेयम्,

पिता—यथेच्छं विहर गुरुकुले ।

९. कुमारः—धर्मं सनातनं ब्रूहि ?

पिता—सुहृन्मित्रार्युदासीनमध्यस्थद्वेष्यबन्धुषु साधुषु पापेषु विशिष्टो भूयाः । भगवान्नरनारायणः प्रसीदतु ।

उक्तानां कर्मणामस्मिन्साद्गुण्यस्य च सिद्धये ।
पुनः पूर्णाहुतिश्चैव प्राणायामादिपूर्विका ॥ ८५९ ॥
कार्या स्यादिति सिद्धान्तो यथाविधि निरूपितः ।
आदौ पुरुषसूक्तेन होमः कार्यस्ततश्च हि ॥ ८६० ॥
सन्ध्याहृत्याश्च गायत्र्यास्त्रिपदायास्ततश्च हि ।
द्वादशाक्षरमन्त्रेण ततः पञ्चाक्षरेण च ॥ ८६१ ॥
ततश्चाष्टाक्षरेणैव ततो बीजैश्च पञ्चभिः ।
योगदेव्याश्चैव ततो महर्षीणां च नामभिः ॥ ८६२ ॥
ततश्छन्दोनामभिश्च ततः शुद्धार्थनामभिः ।
ततश्च प्रणवेनैव होम इत्येव निर्णयः ॥ ८६३ ॥
एवं वै वर्णितानां च दशानां हि महर्षयः ।
होमानां मन्त्रसिद्धानां प्रत्येकमपि धर्मतः ॥ ८६४ ॥
प्राणायामादिसर्वं हि यथाकामं विधीयते ।
इति चाऽवभृतं कर्म प्रशस्तं मुनिपुङ्गवाः ॥ ८६५ ॥
इत्थं समाप्यावभृतं पिता च वटुना सह ।
पूजां चैव सदस्येभ्यो यथाविधि विधाय च ॥ ८६६ ॥
तेभ्यः सदक्षिणाकं च ताम्बूलं सफलं तथा ।
दत्वा कुर्यात्प्रणामांश्च तेभ्यश्चैव यथाविधि ॥ ८६७ ॥
अथाशीर्वचनं चैव सदस्येभ्यो विशेषतः ।
प्राप्नुयाद्ब्रह्मचारी च पितरौ च यथाबलम् ॥ ८६८ ॥

अथ च ब्राह्मणान्सर्वान्बन्धून्मित्राणि सादरम्।
भोजयेच्च यथाशास्त्रं ततः सर्वान्विशेषतः ॥ ८६९ ॥

पूजयित्वा यथास्थानं संप्रतिष्ठापयेन्मुदा।
इति चात्मोपनयनमष्टाङ्गं च यथाविधि ॥ ८७० ॥

व्याख्यातं संग्रहेणैव शुद्धशास्त्रनिरूपितम्।
अन्यत्सर्वं ज्ञातमेव भवद्भिर्मुनिपुङ्गवाः ॥ ८७१ ॥

उपनीतकुमाराणां धर्मो यश्च सनातनः।
सोऽयमित्थं वर्ण्यते हि धर्मज्ञैर्मुनिपुङ्गवैः ॥ ८७२ ॥

रम्ये गुरुकुले वासः सह च ब्रह्मचारिभिः।
सप्तवर्षमितं कालं विहितो धर्मगामिभिः ॥ ८७३ ॥

ततः शिष्टगुरुभ्यश्च भक्त्या परमया च हि।
आत्मीयानि प्राकृतानि चाभ्यस्तानि यथाक्रमम् ॥ ८७४ ॥

यानि तेषां च सर्वेषां शास्त्रीयश्च समन्वयः।
विज्ञेयः स्यादयं धर्मो द्वितीय इति वामनः ॥ ८७५ ॥

प्राह चाऽथ तृतीयश्च शुद्धः स्याद्ब्रह्मचारिणाम्।
शुद्धार्यशिक्षितश्चैव धर्मो गार्हस्थ्यलक्षणः॥ ८७ ॥

यश्च तस्य परिज्ञानमित्युक्तं ब्रह्मसूनुना।
ततस्तुरीयो धर्मः स्याद्विहितानां च कर्मणां ॥ ८७७ ॥

रहस्यार्थस्य विज्ञानं तत्त्वविज्ञानपूर्वकम्।
इत्याह भगवान्धर्मशास्ता योगी च वामनः ॥ ८७८ ॥

ततश्च पञ्चमो धर्मः प्रणवाध्ययनं भवेत्।
तथा योगब्रह्मविद्याध्ययनं स्याद्विशेषतः ॥ ८७९ ॥

इत्येवं पंचधर्माश्च तत्परप्राप्तिहेतवः।
स्वभावनियताश्चैव विहिता ब्रह्मचारिणाम् ॥ ८८० ॥

इति प्रथमसंस्कारे चात्मीयं ज्ञानलक्षणम्।
तच्चोपनयनं ह्येवं वर्णितं स्यान्महर्षयः ॥ ८८१ ॥

अथ प्रथमसंस्कारे ब्राह्मोपनयनं परम्।
तृतीयमितिसिद्धान्तो भवेच्च मुनिपुङ्गवाः ॥ ८८२ ॥

तच्चाङ्गपञ्चकोपेतं विहितं ब्रह्मसूनुना।
प्रार्थना च नवग्राहाः पञ्चग्राहास्तथा पुनः ॥ ८८३ ॥

स्तोमत्रयं तथा सत्यवचनं चेति तानि हि।
पञ्चाङ्गानि भवन्तीति विज्ञेयं मुनिपुङ्गवाः ॥ ८८४ ॥

पूर्वमेव मया तानि व्याख्यातानि महर्षयः।
ब्राह्मोपनयनं चेदं यथाकामं विधीयते ॥ ८८५ ॥

ब्राह्मोपनयने चास्मिन्सर्वे स्युरधिकारिणः।
इत्याह भगवान्धर्मशास्ता नारायणो मुनिः ॥ ८८६ ॥

ब्राह्मोपनयने चास्मिन्नरनारायणस्तथा।
भगवान्दक्षिणामूर्तिः कुमारो भगवांस्तथा ॥ ८८७ ॥

अर्कोणप्रभं दिव्यं तृतीयं लोचनं तथा।
अभयं सर्वभूतेभ्यो ददातीत्याह नारदः ॥ ८८८ ॥

ब्राह्मोपनयनेनैव दीक्षितानां महर्षयः।
दिव्यदृष्टिगोचरस्य दहराकाशवर्तिनः ॥ ८८९ ॥

विज्ञानस्य साधनं च प्रकाशः शुद्धलक्षणः।
क्रमेण वर्धते मेधामण्डले हि महर्षयः ॥ ८९० ॥

तन्मेधामण्डलं चैव दासानां शुद्धकर्मणाम्।
उदयाचलशृङ्गं स्यादिति शङ्करभाषितम् ॥ ८९१ ॥

इति ब्राह्मोपनयनं विज्ञेयं शुद्धसेवितम्।
श्वेतकेत्वादिपञ्चार्यविहितं स्यान्महर्षयः ॥ ८९२ ॥

इति च विद्याभ्यासाख्यकर्मणः प्रथमस्य हि।
संस्कारश्चोपनयनसंज्ञः साङ्गोऽभिवर्णितः ॥ ८९३ ॥

अथ चैवं विवाहाख्यं द्वितीयं कर्म यज्ञवत्।
तस्य चोद्वाहनामाख्यः संस्कारो विहितो भवेत् ॥ ८९४ ॥

द्वितीयकर्मणश्चाऽस्य संसारनियतस्य च।
संस्कारस्य च तस्याऽपि भेदाः सन्ति सहस्रशः ॥ ८९५ ॥

यद्यपि प्राच्यशुद्धार्यैर्भेदाश्चत्वार एव हि।
प्रोक्ता भवन्ति तस्माद्धि ते चत्वारो भवन्ति च ॥ ८९६ ॥

ब्राह्मो दैवस्ततश्चार्षः प्राजापत्यश्च कीर्तितः।
इति भेदाश्च चत्वारो वैदिकाः स्युः सनातनाः ॥

यथादेशं यथाकालं यथाबलमतन्द्रितैः।
महर्षिभिश्च तेषां हि लक्षणं विहितं परम् ॥ ८९८ ॥

तेषां च हि प्राकृतादिभेदैश्चैव त्रिभिः पुनः।
त्रैविध्यमपि कथ्यन्ते शुद्धैश्चैव महार्षिभिः॥ ९९॥

तस्मात्तत्कर्मणश्चास्य संस्कारस्य विशेषतः।
भेदा द्वादश जायन्ते तत्तद्धर्मोपलक्षिताः॥ १००॥

अधिष्ठितानां धर्मं च मानुषं त्रिविधः पुनः।
उद्वाहो ब्राह्मसंज्ञश्च विहितः शुद्धयोगिभिः॥ १०१॥

अधिष्ठितानां दैवं च धर्मं वै देहिनां पुनः।
उद्वाहो दैवसंज्ञश्च विहितः शुद्धयोगिभिः॥ १०२॥

देहिनां चैव सर्वेषामार्षधर्मोपजीविनाम्।
आर्षनामाऽयमुद्वाहो विहितः शुद्धयोगिभिः॥ १०३॥

प्राजापत्यस्वभावं च धर्मं समधितिष्ठताम्।
प्राजापत्याभिधानोऽयमुद्वाहो विहितो भवेत्॥ १०४॥

शेषाश्चोद्वाहसंस्कारा विवाहाख्यानि तानि च।
कर्माणि तत्र सर्वं स्यादासुरं चेति निर्णयः॥ १०५॥

आसुराणां विवाहानामुद्वाहानां तथैव हि।
अधर्मबीजरूपत्वं कथितं शुद्धयोगिभिः॥ १०६॥

तदेतेषां च सर्वेषां लक्षणं मुनिपुङ्गवाः।
इत्थं स्यात्कथितं पूर्वैर्नारदाद्यैश्च योगिभिः॥ १०७॥

ब्राह्मोद्वाहधर्मः प्राकृतो यो महर्षयः।
तस्य स्वरूपमेवं हि कथ्यते शुद्धयोगिभिः॥ १०८॥

यस्मिंश्च धार्मिकाः कन्याज्ञातयः स्वयमेव हि ।
कान्तं पुष्टवपुष्मन्तं वरमाहूय तस्य च ॥ १०९ ॥

विशुद्धे शीलवृत्ते च विद्यां योनिं च कर्म च ।
परिज्ञाय विशेषेण यथामति यथाबलम् ॥ ११० ॥

तथा च देशकालौ च विशुद्धौ मङ्गळावहौ ।
बुध्वा च कन्यकां शुद्धां यथोचितमलङ्कृताम् ॥ १११ ॥

नूत्नवस्त्रभूणाद्यैर्दातव्यमिति वै धिया ।
अशक्तेः पूज्यपूजां च विना मन्त्रं च वैदिकम् ॥ ११२ ॥

आशीर्वचनपूर्वं च ह्यद्भिरेव तु केवलम् ।
वराय संप्रयच्छन्ति तस्मै च प्रीतिपूर्वकम् ॥ ११३ ॥

स्वीकारश्चैव कन्यायाः केवलं प्रीतिपूर्वकः ।
तथा मन्त्रविहीनश्च बन्धुभिश्चाऽनुमोदितः ॥ ११४ ॥

कालदेशस्वभावज्ञैः शिष्टैश्चैव विशेषतः ।
भवेत्सोऽयं प्राकृतः स्यादुद्वाहो ब्राह्मसंज्ञकः ॥ ११५ ॥

मन्त्रेण पूज्यपूजायास्त्यागो यश्चात्र कीर्तितः ।
सोऽयं दारिद्र्यमूलः स्यादिति चाथ महर्षयः ॥ ११६ ॥

इत्थं चैवोच्यते सोऽयमुद्वाहो धर्मलक्षणः ।
दरिद्रा धर्मकामाश्च कन्यकापितरः स्वयम् ॥ ११७ ॥

यदृच्छया चोपगतं वरं दृष्ट्वा तमेव हि ।
परीक्ष्य बहुधा तस्मै तूष्णीं यच्छन्ति कन्यकाम् ॥ ११८ ॥

यत्र चैवं वरस्तूष्णीं कन्यां गृह्णाति सादरम्।
सोऽयं चाऽपि प्राकृतः स्याद्ब्राह्मोद्वाह इतीर्यते ॥ ११९ ॥

बन्धुमध्येऽथवैकान्ते तुल्यशीलगुणं वरम्।
कान्तं विद्याविनीतं च बन्धुभिश्चानुमोदिता ॥ १२० ॥

स्वयं वृणोति कन्या हि यत्र धर्मेण सादरम्।
वरस्तथैव गृह्णाति कन्यां शुद्धां मनोहराम् ॥ १२१ ॥

यत्र सोऽयं प्राकृतः स्यादुद्वाहो ब्राह्मसंज्ञकः।
गान्धर्वसंज्ञकश्चाऽयमिति कैश्चिन्निगद्यते ॥ १२२ ॥

प्रलोभरहितं दानं तादृशं ग्रहणं तथा।
कन्याया न भवेदत्र ततः सोऽयं प्रशस्यते ॥ १२३ ॥

तस्माद्ब्राह्मो विवाहश्च प्राकृतो धर्मलक्षणः।
भवेदिति हि सिद्धान्तः कथ्यते शुद्धयोगिभिः ॥ १२४ ॥

ततश्चाऽयं भवेद्ब्राह्मो ह्यात्मीयो धर्मलक्षणः।
उद्वाहो यत्र कन्या च शुद्धा चैव स्वलङ्कृता ॥ १२५ ॥

आहूय च वरं शिष्टं संपूज्य विधिवच्च तम्।
समन्त्रं दीयते तस्मै पितृभिर्धर्मगामिभिः ॥ १२६ ॥

तथा दत्तां कन्यकां च यथाविधि वरः स्वयम्।
मन्त्रपूर्वं च गृह्णाति यत्र सोऽयं महर्षयः ॥ १२७ ॥

आत्मीयो ब्राह्मसंज्ञश्च कथ्यते हि महर्षिभिः।
यथातो लोकप्रवादोऽयं विवाह इति शाश्वतः ॥ १२८ ॥

वैवाहिकीं क्रियां सन्तः प्रशंसन्ति प्रजाहिताम् ।
लोकप्रवादशान्त्यर्थं पुण्यलोकस्य सिद्धये ॥ १२९ ॥

उद्वाहा मन्त्रसिद्धाश्च क्रियन्ते धर्मगामिभिः ।
तद्वधूवरयोश्चैव ज्ञातिभिर्धर्मगामिभिः ॥ १३० ॥

इति ब्राह्मो विवाहश्च ह्यात्मीयः कथितः परः ।
ततः शुद्धो विवाहश्च ब्राह्मः स्यादेवमेव हि ॥ १३१ ॥

आत्मनो बन्धुरात्मैव गतिरात्मैव चात्मनः ।
आत्मनैवाऽऽत्मने दानं कृतं शुद्धं च तद्भवेत् ॥ १३२ ॥

पुरुषश्चैव पुंरूपं भवेद्ब्रह्म सनातनम् ।
स्त्री च कन्या विशुद्धा च स्त्रीरूपं ब्रह्म वै भवेत् ॥ १३३ ॥

उभयोरनयोश्चैव ब्रह्मशक्त्योः सनातनः ।
जगज्जन्मादिहेतुश्च योगो हि नियतो भवेत् ॥ १३४ ॥

विना शक्तिं परं ब्रह्म तद्विना शक्तिरेव हि ।
नोपास्यते चाऽधिकारिपुरुषैश्च यथा पुनः ॥ १३५ ॥

तथा विना च पुरुषं नैव स्त्री पूज्यते भुवि ।
स्त्रियं विना च पुरुषो लोकैर्नैव हि पूज्यते ॥ १३६ ॥

इति भावनया चैव दृढया च विशुद्धया ।
यस्मिंश्च कन्यका दत्ता गृहीता स्यात्तथैव हि ॥ १३७ ॥

सोऽयं ब्राह्मो विवाहश्च शुद्ध इत्यभिधीयते ।
सोऽयमुद्वाहसंस्कारः शुद्धः स्यादिति निर्णयः ॥ १३८ ॥

कन्यायाः पुरुषस्याऽपि परीक्षा धर्मलक्षणा।
कन्यया पुरुषेणैव कार्या स्याश्च परस्परम् ॥ १३९ ॥

इति ब्राह्मे च शुद्धेऽस्मिन्नुद्वाहे नियमो भवेत्।
पुनरेवं हि नियमश्चोद्वाहेऽस्मिंश्च दृश्यते ॥ १४० ॥

अनन्यपूर्विका चैव कन्या शुद्धा च या भवेत्।
तथा ह्यनन्यपूर्वश्च वरः शुद्धस्तु यो भवेत् ॥ १४१ ॥

तयोर्विज्ञातार्थयोश्च शुद्धोद्वाहो विधीयते।
ब्राह्मश्चेति तथैवं हि नियमश्चात्र दृश्यते ॥ १४२ ॥

उद्वाहेऽस्मिन्निषिद्धः स्याद्वाद्यघोषः शुभावहः।
विशेषतश्च बन्धूनां मित्राणां च समागमः ॥ १४३ ॥

न चैवाडंबरं कर्म लौकिकं वैदिकं तथा।
मन्त्राचार्यं विना चैव सप्तभिः ब्रह्मवादिभिः ॥ १४४ ॥

शिष्टैर्वृद्धैश्च पुरुषैस्तादृशैस्त्रीजनैरपि।
ब्राह्मोद्वाहश्च शुद्धोऽयं कर्तव्य इति निर्णयः ॥ १४५ ॥

ब्राह्मोद्वाहो विशुद्धश्च सर्वेभ्योऽपि विशिष्यते।
ब्राह्मोद्वाहाख्यसंस्कारे त्रिविधे धर्मलक्षणे ॥ १४६ ॥

सामान्यलक्षणं चैव कन्यायाश्च वरस्य च।
विशेषलक्षणं चाऽपि क्रमादित्थं निगद्यते ॥ १४७ ॥

स्यादृतुमती शुद्धा वरकामा मनस्विनी।
भवेत्स्त्री सैव कन्येति कथ्यते कृष्णयोगिना ॥ १४८ ॥

निर्णयित्वा तु कालं हि स्त्रीणां वै पापशङ्किनः।
केचिन्महर्षयः कन्यास्वरूपं प्रवदन्ति च ॥९४९॥

तदेवं वर्णिताश्चैव कन्या नियतवत्सराः।
ब्राह्मोद्वाहे प्राकृते च देयाश्चेत्याह नारदः ॥९५०॥

केचिन्महर्षयः स्त्रीणामारभ्य ऋतुदर्शनम्।
वर्षत्रयं कन्यकेति व्यवहारो भवेदिति ॥९५१॥

वदन्ति धर्मविद्यासु तांश्च कन्या महर्षयः।
ब्राह्मोद्वाहे तदात्मीये देयाश्चेत्याह नारदः ॥९५२॥

ऋतुमत्यश्च या नार्यो न भवन्ति महर्षयः।
तासां कारणपौष्कल्याभावाच्चैव हि मन्त्रतः ॥९५३॥

कृताश्चोद्वाहसंस्कारा विफलाः स्युरितीर्यते।
स्त्रीणामृतुमतीनां च संस्कारो मन्त्रवर्चसा ॥९५४॥

वैवाहिकः कृतश्चैव सफलः सुमुखस्तथा।
दृढबीजप्रभावश्च जायते चेति कथ्यते ॥९५५॥

अत एव ब्रह्मचारी विद्यावान्धर्मकामुकः।
अस्पृष्टमैथुनां रम्यामसमानार्षगोत्रजाम् ॥९५६॥

शुद्धां यवीयसीं चैव कन्यामुद्वाहकामिनीम्।
आत्मीयोद्वाहविधिना ब्राह्मेण च यथाबलम् ॥९५७

मन्त्रसिद्धेन विन्देत सुप्रीतेनान्तरात्मना।
इत्येवं धर्मविद्यासु वर्णितः स्यान्महर्षयः ॥९५८॥

तस्मादृतुमतीनां च मन्त्रसंस्कारलक्षणः ।
ब्राह्मोद्वाहस्तदात्मीयो विहितो ब्रह्मसूनुना ॥ ९५९ ॥

शुद्धा चाराऽनवद्याङ्गी या स्यादृतुमती तथा।
विद्याविनयसंपन्ना स्वतन्त्रा यशसोज्वला ॥ ९६० ॥

सेयं कन्या भर्तृकामा ब्राह्मोद्वाहे महर्षयः ।
शुद्धे च विधिना ग्राह्या भवेदित्याह नारदः ॥ ९६१ ॥

एवं हि त्रिविधे चैव ब्राह्मोद्वाहे महर्षयः ।
वराणां च स्वरूपं हि विज्ञेयं धर्मगामिभिः ॥ ९६२ ॥

आचार्याऽनुमतश्चैव विद्यावान्धार्मिकः शुचिः ।
श्लक्ष्णाङ्गो व्याधिहीनश्च वरः सर्वत्र कीर्त्यते ॥ ९६३ ॥

पित्रोरधीनो भार्यार्थी मन्त्रप्रत्ययवर्जितः ।
अविलुप्तब्रह्मचर्यो दरिद्रः कृपणश्च यः ॥ ९६४ ॥

अशक्तज्ञातिवर्गश्च सांख्यशास्त्रार्थचिन्तकः ।
अर्थशास्त्रपरश्चैव तथाऽर्थाऽर्थी च धर्मतः ॥ ९६५ ॥

कृषिकर्मपरश्चैव वाणिज्यव्यवसायवान् ।
ब्राह्मोद्वाहे प्राकृते च वरः सोऽयं हि कीर्तितः ॥ ९६६ ॥

ब्राह्मोद्वाहे द्वितीये च मन्त्रतन्त्रविशारदः ।
श्रीमद्भिर्ज्ञातिभिश्चैव युक्तश्चैव धनी स्वयम् ॥ ९६७ ॥

दावानाह्निकेष्वेव सन्ध्यास्नानजपादिषु ।
विशेषेण च पुण्यार्थी देवताऽतिथिपूजकः ॥ ९६८ ॥

आत्मविज्ञानसंपन्नश्चात्मशास्त्रविचारवान्।
यश्च सोऽयं विवाहेऽस्मिन्वरः स्यादिति कथ्यते ॥ ९६९॥

ब्राह्मोद्वाहे तृतीये च स्वतन्त्रः शुद्धलक्षणः।
वेदवेदाङ्गतत्त्वज्ञो ब्राह्मशास्त्रविशारदः ॥ ९७० ॥

आचार्यपितृभक्तिश्च संपादितधनस्तथा।
समः सर्वसुहृच्चैव पुत्रार्थी धर्मसिद्धये ॥ ९७१ ॥

यश्च शुद्धां वरां कन्यां स्वेच्छयैव समीप्सति।
सोऽयं भवेद्वरश्चेति निर्णीतं ब्रह्मसूनुना ॥ ९७२ ॥

उद्वाहेष्वपि सर्वेषु दृष्टाऽदृष्टफलं पुनः।
इत्थं हि कथ्यते धर्मविधिज्ञैर्मुनिपुङ्गवैः ॥ ९७३ ॥

ब्राह्मोद्वाहेषु सर्वेषु त्रिषु चैव महर्षयः।
द्वयोस्तु कन्यादातुश्च पुण्यभोगः फलं भवेत् ॥ ९७४ ॥

तथा तृप्तिः पितृणां च कन्यादातुर्महर्षयः।
भवेदिति हि सिद्धान्तः सतां वै संमतो भवेत् ॥ ९७५ ॥

ब्राह्मोद्वाहे च शुद्धेऽस्मिन्धर्मायत्तस्वभावयोः।
तत्कन्यावरयोश्चैव गृहमेधः प्रजार्थकः ॥ ९७६ ॥

भवेत्तथा पुण्यलोको ब्रह्मविज्ञानमुत्तमम्।
तयोः फलं च कथितं नारदाद्यैर्महर्षिभिः ॥ ९७७ ॥

प्रजानामभिवृद्धिश्च या भवेद्गृहमेधतः।
तया तृप्ताश्च पितरः पूर्णौ तौ दंपती तथा ॥ ९७८ ॥

भवेयुरिति विद्यासु सप्रमाणं निरूपितम्।
इत्थं सनातनो धर्मो दंपत्योश्च निगद्यते ॥ १७९ ॥

भार्यापत्योर्हि संबन्धस्त्रीपुंसोस्तुल्य एव हि।
रतिः साधारणो धर्मः स्यादपत्यजनिस्तथा ॥ १८० ॥

भर्त्रा सह च धर्मं हि पत्नी चैव समाचरेत्।
तथैव साकं भर्ताऽपि सर्वधर्मान्समाचरेत् ॥ १८१ ॥

ततः स्त्रीपुरुषयोश्च संबन्धो धर्मसंमतः।
धर्मस्य कारणं चेति कथ्यते नारदादिभिः ॥ १८२ ॥

अन्येष्वपि विवाहेषु चैवमेव फलं श्रुतम्।
उद्वाहे त्वासुरे दुष्टं फलं च स्यादितीर्यते ॥ १८३ ॥

इति सर्वविवाहानां फलं सामान्यतो भवेत्।
इत्थं ब्राह्मे विवाहे च भेदोऽप्येवं हि दृश्यते ॥ १८४ ॥

यः कन्यावरयोश्चैव प्रीत्या जातः परस्परम्।
स च गान्धर्वसंज्ञः स्यादित्युक्तं पूर्वमेव हि ॥ १८५ ॥

तस्याऽपि मन्त्रसंस्कारो विहितो धर्मगामिभिः।
तस्मादेव स्वमात्मानं याचन्तं च वरं प्रति ॥ १८६ ॥

कन्या कण्वस्य दुहिता सुप्रसन्ना समाहिता।
धर्मयुक्तमिदं वाक्यं चेत्थं प्राह महर्षयः ॥ १८७ ॥

ख्यातो लोकप्रवादोऽयं विवाह इति शाश्वतः।
वैवाहिकां क्रियां सन्तः प्रशंसन्ति प्रजाहिताम् ॥ १८८ ॥

लोकप्रवादशान्त्यर्थं विवाहं विधिना कुरु ।
यथायुक्तो विवाहः स्यात्तथा युक्ता प्रजा भवेत् ॥ १८९ ॥

युक्तत्वं च विवाहस्य मन्त्रसंस्कारतो भवेत् ।
दुरुक्तमपि राजेन्द्र क्षन्तव्यं धर्मकारणात् ॥ १९० ॥

सन्त्यत्र यज्ञपात्राणि दर्भाः सुमनसोऽक्षताः ।
आज्यं हविस्तथा लाजाः सिकता ब्राह्मणास्तथा ॥ १९१॥

वैवाहिकानि चान्यानि समस्तानीह सन्ति च ।
तदावयोर्विवाहं च समन्त्रं कुरु मानद" ॥ १९२ ॥

इति तस्माद्विवाहे च गान्धर्वे ब्राह्मसंमिते ।
संस्कारो मन्त्रसिद्धश्च विहितः शुद्धयोगिभिः ॥ १९३ ॥

गान्धर्वे प्राकृते चैवं विशेषनियमो भवेत् ।
यावद्गर्भं न धत्ते च कन्या गान्धर्वलक्षणा ॥ १९४ ॥

तावदेव हि संस्कर्तुं योग्या सैवेति कथ्यते ।
उत्तरैर्दाक्षिणात्यैश्च धर्मज्ञैश्च महर्षिभिः ॥ १९५ ॥

अत एवोद्वाहशब्दरहस्यार्थौ महर्षयः ।
इत्थं निगद्यते शुद्धरहस्ये हि महात्मना ॥ १९६ ॥

भर्तृदत्तं च गर्भं स्त्री यदा ह्युद्वहते मुदा ।
उद्वाहश्च तदा तस्या जात इत्यवधार्यताम् ॥ १९७ ॥

तस्माद्गर्भस्योद्वहनं चोद्वाह इति निर्णयः ।
इत्येवं धर्मविद्यासु विशेषेण निरूपितः ॥ १९८ ॥

स्त्रीपुंसोश्चैव यो योगो धर्म्यश्च विधिपूर्वकः ।
उद्वाहः सोऽयमेवेति तावत्कन्येति सोच्यते ॥ ९९९ ॥

इति तस्माच्च गान्धर्वो ब्राह्मोद्वाह इतीर्यते ।
शुद्धेऽस्मिन्दर्शने चैव मुनिभिर्धर्मगामिभिः ॥ १००० ॥

इत्थं हि राक्षसोद्वाहो भवेत्सोऽयं महर्षयः ।
यश्च वै ब्राह्मधर्मश्च कृतः सद्भिर्विशेषतः ॥ १००१ ॥

बलात्कारेण कन्यायाः स्वीकारो यत्र वै भवेत् ।
सोऽयं स्याद्राक्षसश्चेति निषिद्धः स इतीर्यते ॥ १००२ ॥

उद्वाहो राक्षसो यश्च कृतः स्याद्विधिपूर्वकः ।
ब्राह्मः सोऽयमितीत्येव सिद्धान्तः शुद्धसंमतः ॥ १००३ ॥

तस्य चैवं हि धर्मश्च वर्णितो विधिपूर्वकः ।
येन वै दंपती शुद्धौ भवेतां धर्मगामिनौ ॥ १००४ ॥

सर्वविद्याविनीतं च सुन्दरं पुरुषं परम् ।
तुल्यशीलवयोवृत्तं तुल्याभिजनलक्षणम् ॥ १००५ ॥

परीक्ष्य बहुधा चाऽपि धिया च मनसा तथा ।
सोऽयं भर्ता च मे भूयादिति निश्चित्य धर्मतः ॥ १००६ ॥

तमेव चिन्तयन्ती या कन्या च तपसोज्वला ।
तादृशीं तां च कन्यां वै परिज्ञाय बली वरः ॥ १००७ ॥

राक्षसेन विधानेन विन्देत स्वप्रयत्नतः ।
न च दुष्टोऽयमुद्वाह इति शुद्धैर्निगद्यते ॥ १००८ ॥

हेतुना येन केनापि स्वार्थदुष्टेन च प्रियम् ।
अकुर्वतां च कन्याया द्विषतां च विशेषतः ॥ १००९ ॥

तत्कन्याबान्धवानां च पततां न्याय्यवर्त्मनः ।
असतां च युयुत्सूनां बलात्कारेण भूयसा ॥ १०१० ॥

तथा जाते चोपरोधे सति तांश्च वरो बली ।
यावच्छक्यं जीवहिंसां विनैव हि सुशिक्षयेत् ॥ १०११ ॥

इति तस्य स्वरूपस्य निश्चितत्वान्महर्षिभिः ।
सोऽयं ब्राह्मोद्वाह इति भगवानाह नारदः ॥ १०१२ ॥

ज्ञातीनां चैव संमर्दे सति शान्ते च धर्मतः ।
सुलग्ने सुमुहूर्ते च काले माङ्गल्यलक्षणे ॥ १०१३ ॥

समन्त्रः सोऽयमुद्वाहः कार्य इत्येव निर्णयः ।
राक्षसेऽपि त्रयो भेदाः कथ्यन्ते चैवमेव हि ॥ १०१४ ॥

यस्मिन्प्राणिक्षयश्चैव महान्वै संप्रजायते ।
मन्त्रसंस्काररहितो विवाहश्च महर्षयः ॥ १०१५ ॥

सोऽयं हि प्राकृतोद्वाहो राक्षसो ब्राह्मसंमितः ।
प्राणिक्षयं विनैव स्याद्विवाहो यत्र दृश्यते ॥ १०१६ ॥

समन्त्रश्च तथा सोऽयमुद्वाहश्चात्मलक्षणः ।
भवेद्ब्राह्मस्वरूपश्चेत्याह व्यासो महामुनिः ॥ १०१७ ॥

यत्र कन्या विशुद्धा च हृता स्यात्सन्धिपूर्वकम् ।
वरेण च तथोद्वाहो मन्त्रपूर्वः कृतो भवेत् ॥ १०१८ ॥

सोऽयं भवेद्राक्षसश्च ब्राह्मः शुद्ध इतीर्यते ।
धर्मविद्यारहस्यज्ञैः शुद्धैश्च मुनिपुङ्गवैः ॥ १०१९ ॥

राक्षसश्चायमुद्वाहस्त्रिविधो ब्राह्मसंज्ञकः ।
भवेच्च निहितो धर्मविद्यासु च महात्मभिः ॥ १०२० ॥

यतश्चात्र परा प्रीतिः स्याद्वधूवरयोरपि ।
ततश्च राक्षसः सोऽपि ब्राह्म इत्येव निर्णयः ॥ १०२१ ॥

यतः कन्यापितृभ्यां च कन्याया ग्रहणं पुनः ।
बलात्कारेण भवति ततोऽयं राक्षसाभिधः ॥ १०२२ ॥

विचार्यमाणे तस्मिंश्च धर्मदृष्ट्या महर्षयः ।
सोऽयं धर्म्यश्च भवति धर्मः स्यात्प्रीतिलक्षणः ॥ १०२३ ॥

अतः पुरुषशक्त्योश्च योगः स्यात्प्रीतिलक्षणः ।
प्रियं हि ब्रह्मणश्चैव मुखं स्यादिति हि श्रुतिः ॥ १०२४ ॥

विवाहेष्वपि सर्वेषु तद्वधूवरयोरपि ।
विशुद्धा परमा प्रीतिर्धर्ममूलमितीर्यते ॥ १०२५ ॥

यदि कन्याज्ञातयश्च स्वार्थदोषप्रपीडिताः ।
कन्याविवाहकाले च द्विषन्तः स्युर्महर्षयः ॥ १०२६ ॥

तिरस्कार्याश्च तेऽपि स्युरिति शङ्करभाषितम्
क्रमेण लालनीयाः स्युस्ते वरेणेति निर्णयः ॥ १०२७ ॥

तस्माच्च राक्षसोद्वाहो विहितो धर्मनामिभिः ।
ब्राह्मश्चेति विशेषेण धर्मोऽयं हि सनातनः ॥ १०२८ ॥

यत्र सुप्ता च रुदती क्षिपन्ती च विचेतना ।
ज्ञातिहीना च कृपणा कन्या या स्यात्तपस्विनी ॥ १०२९॥

कामोपहतचित्तेन धर्मतत्त्वमजानता ।
बलात्कारेण नीता स्यात्सोऽयं स्याद्दुष्टराक्षसः ॥ १०३० ॥

लोकधर्मविदा चैव नीतिज्ञेन विशेषतः ।
वरेणाऽयं न कार्यः स्यादुद्वाहो दुष्टराक्षसः ॥ १०३१ ॥

इति त्याज्योपादेयत्वं तस्य चैव महर्षयः ।
शुद्धधर्मरहस्यज्ञैः कथितं धर्मगामिभिः ॥ १०३२ ॥

अथ दैवो विवाहश्च भवेदित्थं महर्षयः ।
व्याख्यातः सरहस्यं हि नारदाद्यैर्महर्षिभिः ॥ १०३३ ॥

यस्मिन्नभर्तृका चैव धर्मशीला यशस्विनी ।
अनपत्याऽनवद्याङ्गी स्त्री च यौवनलक्षणा ॥ १०३४ ॥

वरेण धर्मशीलेन गृहीता विधिपूर्वकम् ।
सोऽयं दैवो विवाहः स्यादिति शङ्करभाषितम् ॥ १०३५ ॥

इयमन्येन भुक्तेति ततस्त्याज्येति धर्मतः ।
लोकापवादजां चैव बुद्धिं सन्त्यज्य धर्मवित् ॥ १०३६ ॥

सर्वभूतेषु सिद्धं च दैवं भावं सनातनम् ।
सर्वस्वभावोपेतं च शुद्धं विज्ञाय धर्मतः ॥ १०३७ ॥

स्वतन्त्रश्च वरो धीमान्यस्मिन्गृण्हाति च स्त्रियम् ।
सोऽयं भवेद्दैवसंज्ञो विवाह इति नारदः ॥ १०३८ ॥

दैवोद्वाहेन विधिना ग्राह्या स्त्रीश्चैव या भवेत् ।
पुनर्भूरिति संज्ञा हि तस्याश्च गदिता भवेत् ॥ १०३९ ॥

नष्टे मृते प्रव्रजिते क्लीबे च पतिते पतौ ।
दैवोद्वाहेन च स्त्रीणां पतिरन्यो विधीयते ॥ १०४० ॥

केचिन्महर्षयो लोके धर्मविद्याप्रपवर्तकाः ।
स्वार्थावेशेन वै स्त्रीणां पुनर्भूणां महर्षयः ॥ १०४१ ॥

उद्वाहं नाभिनन्दन्ति विहितं धर्मगामिभिः ।
तदेतेषां हि सिद्धान्तं नाभिनन्दति नारदः ॥ १०४२ ॥

तत्र तत्त्वं प्रवक्ष्यामि पक्षपातं विनैव हि ।
नारदाद्यैर्मुनिवरैर्व्याख्यातं धर्मकोविदैः ॥ १०४३ ॥

यथा च मृतदाराणां पुंसां वै धर्मगामिनाम् ।
स्त्रीश्चान्या विहिता कन्या तथा स्त्रीणां महर्षयः ॥१०४४॥

पुनर्भूणां पतिश्चान्यो विहितो धर्मगामिभिः ।
एतन्नियतकालं स्यादिति केचिन्मर्षयः ॥ १०४५ ॥

निर्णयन्ति स्वबुद्ध्यैव विना धर्मानुशासनम् ।
तदिदं पक्षपातेन कथितं चेति निर्णयः ॥ १०४६ ॥

एवं स्त्रीणां विशुद्धं च स्वातन्त्र्यं चात्मलक्षणम् ।
दूषयन्त्यविवेकेन केचिन्मूढा महर्षयः ॥ १०४७ ॥

स्वातन्त्र्यं च यथा पुंसां तथा स्त्रीणां च संमतम् ।
पत्न्यभावे यथा पुंसां धर्मनाशश्च कथ्यते ॥ १०४८ ॥

तथा स्त्रीणां पत्यभावे धर्महानिर्भवेदिति ।
नारदाद्यैर्मुनिवरैः कथितं सत्यधर्मतः ॥ १०४९ ॥

यथा पतिश्च पूज्यः स्यात्स्त्रिया चैव महर्षयः ।
तथा पूज्या भवेत्स्त्रीश्च पतिना धर्मगामिना ॥ १०५० ॥

तस्मात्पतौ गते स्त्रीणां चोद्वाहः पुनरेव हि ।
विहितो दैवसंस्कारादिति शुद्धैर्महर्षिभिः ॥ १०५१ ॥

पातिव्रत्यं परो धर्मः स्त्रीणां स्यादिति कथ्यते ।
तत्र तत्त्वं हि विज्ञेयं भवेदेवं महर्षिभिः ॥ १०५२ ॥

परप्राप्तेः साधनं च यच्च स्यादधिकारिणाम् ।
तदेव व्रतमित्येव कथ्यते धर्मकोविदैः ॥ १०५३ ॥

पत्युर्व्रतं च यच्च स्यात्स्त्रियश्चापि तदेव हि ।
व्रतं स्यादिति सिद्धान्तास्त्रियः सर्वाः पतिव्रताः ॥१०५४॥

भवन्तीति च सिद्धान्तो दर्शने स्यात्सनातनः ।
ततश्च त्रिविधाः सन्ति स्त्रियश्चैव पतिव्रताः ॥ १०५५ ॥

म्रियमाणे सति पतौ श्रीमती या मनस्विनी ।
संपूर्णशुद्धसन्ताना चात्मविद्याविचक्षणा ॥ १०५६ ॥

भवेत्स्त्रीश्च शुभाचारा सेयं चैव मृते पतौ ।
सर्वेषां च समं शुद्धं व्रतं चैव समाश्रयेत् ॥ १०५७ ॥

पतिर्विश्वस्य यो विश्वसाक्षी देवो महेश्वरः ।
आत्मेश्वरश्च यश्चास्ति स्वतन्त्रो ब्रह्मलक्षणः ॥ १०५८ ॥

सोऽयं भवेत्पतिश्चैव परमः स्यादितीर्यते ।
तस्य व्रतं च यच्च स्यात्तत्परप्राप्तिसाधनम् ॥ १०५९ ॥

सर्वार्थदं सर्वसमं धर्ममूलं सनातनम् ।
शुद्धं तदेव सेव्यं स्यान्मृते भर्तरि च स्त्रिया ॥ १०६० ॥

सेयं भवेत्पतिव्रता परमा प्रथमा भवेत् ।
सर्वैरभ्युदयकामैः सेव्येयमिति कीर्त्यते ॥ १०६१ ॥

मृते पतौ च कार्तज्ञं भक्तिः संसारलक्षणा ।
देवरूपोऽयमित्येव भावना धर्मलक्षणा ॥ १०६२ ॥

सर्वमेतच्च तस्यास्तु सामान्यो धर्म उच्यते ।
सामान्यधर्मानुरूपा चर्या च नियता भवेत् ॥ १०६३ ॥

अस्याश्च दैवोद्वाहो हि नैवेति परिकथ्यते ।
इयमन्यं पतिं कामाद्वृणोति यदि पापिनी ॥ १०६४ ॥

अपत्यघ्नी दुराचारा तां क्षिपेद्दूरतः कुलात् ।
तस्माच्च पुनरुद्वाहो निषिद्धो धर्मगामिभिः ॥ १०६५ ॥

मध्यमा पतिव्रता च कथ्यतेत्थं महर्षिभिः ।
म्रियमाणे सति पतौ श्रीमती या मनस्विनी ॥ १०६६ ॥

या ह्यसंपूर्णसंताना शुद्धसन्तानगृद्धिनी ।
भवेच्चैव शुभाचारा सेयं स्त्री च मृते पतौ ॥ १०६७ ॥

अन्यं पतिं च विन्देतौ स्वतन्त्रा धर्मलोलुपा ।
एवं नष्टे प्रव्रजिते क्लीबे च पतिते पतौ ॥ १०६८ ॥

उद्वाहश्च समन्त्रश्च स्त्रीणां हि विहितो भवेत्।
तस्मादनावृताश्चेति स्त्रियः सर्वा ह्युदीरिताः ॥ १०६९ ॥

यच्च स्याज्जीवतः पत्युर्व्रतं शुद्धं परं भवेत्।
तस्यास्तदेव हि भवेद्व्रतं चेति पतिव्रता ॥ १०७० ॥

संमान्या स्याद्वृद्धिकामैः सर्वैश्च पुरुषैरपि।
इति धर्मरहस्यं च गुप्तं सर्वत्र दृश्यते ॥ १०७१ ॥

अस्याः सामान्यधर्मस्तु पूर्वोक्तो यो महर्षयः।
त्रिविधश्च न चैवेति शास्त्रादेवाऽवगम्यते॥ १०७२ ॥

सामान्यधर्मानुरूपा चर्यापि न विधियते।
ततः श्राद्धादिकं कर्म विहितं न भवेत्ततः ॥ १०७३ ॥

लोकापवादशान्त्यर्थं पतिश्राद्धं च यत्कृतम्।
तद्भवेच्छ्रद्धया हीनं कृतं तच्च निरर्थकम् ॥ १०७४ ॥

भर्तृदत्तं च यद्द्रव्यं सर्वं तच्च यथाविधि।
तद्भर्तृज्ञातिवर्गेभ्यो देयं मध्यमया भवेत् ॥ १०७५ ॥

इति धर्मरहस्याद्धि बुध्यते हि महर्षयः।
मध्यमा पतिव्रता च धर्ममेनं समाश्रयेत् ॥ १०७६ ॥

अथैवं पतिव्रता च तृतीया ह्यभिवर्णिता।
नारदाद्यैर्मुनिवरैर्धर्मज्ञैर्मुनिपुङ्गवाः ॥ १०७७ ॥

म्रियमाणे सति पतौ कन्या चैव मनस्विनी।
अस्पृष्टमैथुना चैव या च तिष्ठत्यनिन्दिता ॥ १०७८ ॥

धर्मानुशासनैस्तस्याः पतिरन्यो विधीयते ।
एवं नष्टे प्रव्रजिते क्लीबे च पतिते पतौ ॥ १०७९ ॥

तस्य पत्युर्व्रतं तस्या नियतं स्यादितीर्यते ।
पतिर्यश्च पुनस्तस्या भवेच्च मुनिपुङ्गवाः ॥ १०८० ॥

प्रोक्तः सामान्यधर्मश्च त्रिविधो यो महर्षयः ।
न चास्या विहिताः सन्ति धर्मकामैर्महर्षिभिः ॥ १०८१ ॥

इतीयं धर्मशीला च भवेदेव पतिव्रता ।
तृतीया चेति सिद्धान्तो महर्षिभिरिहोच्यते ॥ १०८२ ॥

इत्थमत्र पुनस्तत्त्वं विचार्यं धर्मबुद्धिभिः ।
स्त्रीणामशान्तकामानां धार्मिकीणां विशेषतः ॥ १०८३ ॥

तथा चैवाऽनपत्यानां जीविते धर्मलक्षणे ।
अशक्तानामनीशानां मृते सति पतौ च ताः ॥ १०८४ ॥

कं च वा धर्ममाश्रित्य पूजयन्ति मृतं पतिम् ।
पूजायां चैव तासां तु पत्युः श्रद्धा कथं भवेत् ॥ १०८५ ॥

नष्टस्वभावास्ताश्चैव कथं धर्मविदो जनाः ।
व्रतेन चानुमोदन्ते पत्युश्चैव महर्षयः ॥ १०८६ ॥

इतिहासैः पुराणैश्च तथा धर्मानुशासनैः ।
पतौ सत्येव धर्माश्च तस्यातिब्रत्यलक्षणाः ॥ १०८७ ॥

विहिताश्च स्युरित्येव सिद्धान्तो बुध्यते परः ।
सत्यधर्मरहस्यज्ञैः सिद्धान्तः सोऽयमादृतः ॥ १०८८ ॥

किं चैवं हि पुनस्तत्त्वं पातिव्रत्यस्य कथ्यते ।
आचार्यैर्गोभिलाद्यैश्च शुद्धार्यैर्धर्मकोविदैः ॥ १०८९ ॥

स्त्रीपुंसोश्चैव योगो हि प्रजार्थै च विधीयते ।
तथैव विहितश्चैव सह धर्मं चरेदिति ॥ १०९० ॥

विधिः प्रजार्थकश्चेति भारतादवगम्यते ।
विना प्रजां हि सर्वांश्च पुरुषार्थान्महर्षयः ॥ १०९१ ॥

स्त्रियो विन्दन्ति धर्मेण स्वतन्त्रेणेति निर्णयः ।
तस्माच्च कथितो धर्मः स्त्रीणां चैवं महर्षयः॥ १०९२ ॥

" तपश्चर्या च दानं च पतौ तस्याः समर्पितम् ।
रूपं कुलं यशस्तेजस्तस्मिन्सर्वं प्रतिष्ठितम् ॥ १०९३ ॥

एवं व्रतसमाचाराः स्ववृत्तेनैव शोभनाः ।
स्वभर्त्रा च समं गच्छेत्पुण्यलोकांश्च शाश्वतान् ॥ १०९४ ॥

वृद्धो विरूपो बीभत्सुर्धनवान्निर्धनोऽपि वा ।
एवं भूतोऽपि भर्ता च स्त्रीणां भूषणमुत्तमम् ॥ १०९५ ॥

आढ्यं वा रूपयुक्तं वा विरूपं धनवर्जितम् ।
या पतिं तोषयेत्साध्वी सा पत्नीनां विशिष्यते ॥ १०९६ ॥

एवं प्रवर्तमानायाः पतिः पूर्वं म्रियेत चेत् ।
तदानुमरणं गच्छेत्पुनर्धर्मं चरेत वा " ॥ १०९७ ॥

इति चात्र रहस्यं हि विज्ञेयं मुनिपुङ्गवाः ।
स्त्रीणां चैव स्वसंसारनियंता धर्मलक्षणाः ॥ १०९८ ॥

व्यवसायाश्च येनैव पतिना पूर्णलक्षणाः ।
तेनैव चानुमरणं स्त्रीणां हि विहितं पुरा ॥ १०९९ ॥
तथा च न भवन्त्येह स्त्रियो याश्च महर्षयः ।
ताभिः पुनः पतिश्चैव धर्मार्थं गृह्यते वरः ॥ ११०० ॥
इत्येवं हि भवेत्स्त्रीणां पातिव्रत्यं परं भवेत् ।
तस्मात्पतिव्रताश्चैव त्रिविधाश्चेति निर्णयः ॥ ११०१ ॥
पुनर्भूणां हि स्त्रीणां च यश्चोद्वाहोऽभिवर्णितः ।
दैवसंज्ञश्च तस्यापि प्राकृतादिविभेदतः ॥ ११०२ ॥
त्रैविध्यमपि धर्मज्ञैः कथ्यते धर्मलक्षणम् ।
तेषां हि त्रिविधानां च स्वरूपं चैवमुच्यते ॥ ११०३ ॥
स्त्रीणामक्षतयोनीनां पुनर्भूणां तथैव हि ।
अकामहतचित्तानां चोद्वाहो दैवलक्षणः ॥ ११०४ ॥
समन्त्रं क्रियमाणश्च सोऽयं स्याच्छुद्धलक्षणः ।
धर्म्यश्चेति हि सिद्धान्तो वामनाचार्यसंमतः ॥ ११०५ ॥
सञ्जातमैथुनानां च पुनर्भूणां महर्षयः ।
तथा पुत्रार्थिनीनां च स्त्रीणां चैव विशेषतः ॥ ११०६ ॥
आत्मविद्यार्थिनीनां च पत्युः सङ्गाद्यथाभवम् ।
आत्मीयश्च समन्त्रः स्यादुद्वाहो दैवलक्षणः ॥ ११०७ ॥
स्त्रीणां कामहतानां च पुनर्भूणां महर्षयः ।
धर्मेण पतिमन्यं च कामिनं शुद्धमानसम् ॥ ११०८ ॥

तथा प्रार्थयमानानां चोद्वाहो दैवसंज्ञकः।
केवलं प्राकृतश्चैव भवेदिति च निर्णयः॥ ११०९ ॥

प्राकृतस्य च तस्यापि संस्कारो मन्त्रलक्षणः।
जाते गर्भे च तत्स्त्रीणां धर्मार्थं पतिभिः पुनः॥ १११० ॥

कार्य इत्येव सिद्धान्तो निर्णयाद्यैरिहोच्यते।
तस्मात्पतिव्रतानां च व्याख्यातानां महर्षयः॥ ११११ ॥

मध्यमायास्तृतीयायाः पतौ सत्येव कीर्तितम्।
पातिव्रत्यं च विहितं भवेदित्येव निर्णयः॥ १११२ ॥

इति ज्ञेयाः पतिव्रताः पातिव्रत्यं च कीर्तितम्।
तथा ह्यपत्नीकानां च पुंसां दैवो विधीयते॥ १११३ ॥

उद्वाहस्त्रिविधः सोऽयमिति चात्राह वामनः।
अत्रेत्थं तत्त्वमाहुस्ते धर्मविद्याप्रवर्तकाः॥ १११४ ॥

यथा स्त्रीणां च धर्मस्य पतिर्मूलं तथैव हि।
पुंसां चैव हि धर्मस्य स्त्रीः स्यान्मूलमितीर्यते॥ १११५ ॥

ततः स्त्रियं विना धर्मः पुंसां चैव न शोभते।
तथा विना च पुरुषं स्त्रीणां धर्मो न शोभते॥ १११६ ॥

तस्मात्स्त्रीपुरुषरूपं धर्ममूलमितीर्यते।
इति चैवं हि कथितो दैवोद्वाहो यथाविधि॥ १११७ ॥

यथाधर्मरहस्यं हि संग्रहेण महर्षयः।
आपद्धर्मं समाश्रित्य विहितोऽयं महर्षिभिः॥ १११८ ॥

ततश्चार्षोब्राह्मधर्मः प्रोक्तः स्यादेवमेव हि ।
अस्मिन्महर्षयश्चैव तेभ्यः स्युरधिकाश्च ये ॥ १११९ ॥

गुणैर्महर्षितुल्याश्च मानुषाः शुद्धवर्चसः ।
अकामहतचित्ताश्च भवेयुरधिकारिणः ॥ ११२० ॥

अत्रेत्थमवधेयं स्याद्रहस्यं धर्मकोविदैः ।
यदर्थं कल्पितोऽयं स्यात्सादरं हि महर्षिभिः ॥ ११२१ ॥

भवेत्कालेन दुष्टेन दुष्टैश्चैव जनैरपि ।
यदा रसा नीरसा स्यात्तदा लोकस्य च क्षयः ॥ ११२२ ॥

धर्मबद्धस्य च भवेत्तथा धर्मस्य च क्षयः ।
एवं भूते च लोकेऽस्मिन्विरुद्धसमयाकुले ॥ ११२३ ॥

भवन्त्यज्ञा दरिद्राश्च दुःखिनश्चैव सामयाः ।
तथा ह्यल्पायुषश्चैव जनाः सर्वे यथाक्रमम् ॥ ११२४ ॥

किं च नाशो ह्योषधीनां तथान्नानां विशेषतः ।
अपामग्नेश्च दुष्टत्वात्प्रजासर्गस्य धर्मतः ॥ ११२५ ॥

तथैव परविद्याया दर्शनानां विशेषतः ।
वेदानां चैव शास्त्राणां कलानां च तथैव हि ॥ ११२६ ॥

कर्मणां च प्रशस्तानां साधूनां वर्त्मनस्तथा ।
जायते च यथादेशं यथाक्रममितीर्यते ॥ ११२७ ॥

एवं भूते च लोकेऽस्मिन्बीजावापः सुखावहः ।
येन लोकाः समस्ताश्च प्राप्नुयुश्च परां गतिम् ॥ ११२८ ॥

कार्योऽधिकारिभिश्चेति भारतादवगम्यते ।
इत्थमेव हि कथ्यन्ते सर्वे ते चाधिकारिणः ॥ ११२९ ॥

विद्यावन्तो विनीताश्च चरन्तो धर्ममुत्तमम् ।
आस्तिका वैदिकाश्चैव सदाचाराः परावराः ॥ ११३० ॥

त्रयाणां चैव तन्त्राणां विज्ञातारो विशेषतः ।
वेत्तारः कालधर्माणां समभावाः शुभाश्रयाः ॥ ११३१ ॥

सत्यव्रताः सत्यपराः सत्यज्ञाः सत्यगामिनः ।
इति तस्माद्धि तेषां स्याच्छ्रैष्ठ्यं च श्रुतिचोदितम् ॥ ११३२ ॥

शुद्धं पञ्चदशानां च कथितानां विशेषतः ।
गुणानां चैव पौष्कल्यं प्रजानां जायते क्रमात् ॥ ११३३ ॥

एवं पौष्कल्यमापन्ना जनाश्च भुवि साधुभिः ।
चतुर्विधा भवन्तीति कथ्यन्ते च प्रमाणतः ॥ ११३४ ॥

इतिहासपुराणेषु तथा वेदेषु धर्मतः ।
चातुर्विध्यं हि तत्रापि बहुधा वर्णितं भवेत् ॥ ११३५ ॥

तत्र शूद्राः पराः श्रेष्ठास्ततो वैश्यास्ततो नृपाः ।
ततश्च ब्राह्मणाश्चैव ततश्चैव महर्षयः ॥ ११३६ ॥

ततः सिद्धा महात्मानः श्रेष्ठाः स्युश्चोत्तरोत्तरम् ।
इत्थं बहुविधं चैव चातुर्विध्यं महर्षयः ॥ ११३७ ॥

गुणकर्मविभागेन कथ्यते नारदादिभिः ।
तेषु प्रगणिता ये च पुमांसो ह्यधिकारिणः ॥ ११३८ ॥

तादृश्यश्च स्त्रियः सर्वाः सर्वे चैते महर्षयः ।
उद्वाहे चार्षधर्मे च भवेयुरधिकारिणः ॥ ११३९ ॥

यथा लोकः समुच्छेदं न गच्छेत तथैव हि ।
कालदेशं च वीक्ष्यैव प्रजायै चैव धर्मतः ॥ ११४० ॥

सद्बीजायै सुबीजायै वृद्धिदायै च मन्त्रतः ।
उद्वाहः सोयमद्भिश्च कार्य इत्येव निर्णयः ॥ ११४१ ॥

यथा प्रजाभिवृद्धिश्च विशुद्धा धर्मलक्षणा ।
तथा लोकाभिवृद्धिश्च शुद्धभूतिमती भवेत् ॥ ११४२ ॥

अत एव भवेत्सोऽयमुद्वाहो धर्मलक्षणः ।
प्राजापत्यस्य मूलं स्यादिति चाहह वामनः ॥ ११४३ ॥

तत एव भवेत्सोऽयमुद्वाहो धर्मगामिभिः ।
कार्य इत्येव सिद्धान्तो वेदादेवावगम्यते ॥ ११४४ ॥

इति चार्षोद्वाहधर्मो व्याख्यातः स्यान्महर्षयः ।
अथोद्वाहश्च धर्म्यः स्यात्प्राजापत्याभिधो हि यः ॥ ११४५ ॥

सोऽयमित्थं वर्ण्यते च धर्मज्ञैश्च महात्मभिः ।
अनपत्यः प्रजाकामो धार्मिको वेदविच्छुचिः ॥ ११४६ ॥

अकामहतचित्तश्च मुमुक्षुः पैतृकाहणात् ।
पुमान्येनैव विधिना गृण्हीयात्सुभगां स्त्रियम् ॥ ११४७ ॥

प्राजापत्यो विधिः सोऽयं भवेदुद्वाहलक्षणः ।
इति सर्वदर्शनेषु सद्दृष्टान्तमुदाहृतः ॥ ११४८ ॥

सहोभौ चरतां धर्ममिति भक्त्या वदन्पुमान्।
प्राजापत्येन विधिना शुद्धां विन्देत च स्त्रियम् ॥ ११४९ ॥

यथा पुमांसो विन्देरन्नपत्यार्थं स्त्रियस्तथा।
स्त्रियः सर्वाश्च विन्देरन्पुंसस्तान्पुण्यलक्षणान् ॥ ११५० ॥

प्राजापत्येन विधिना चेति नारदभाषितम्।
इत्थं चैव विधिः सोऽयं दृश्यते मुनिपुङ्गवाः ॥ ११५१ ॥

तपस्विनी च या शुद्धा स्वपरप्राप्तये पुनः।
तथाऽनुद्वाहिता चैव जितकामा मनस्विनी ॥ ११५२ ॥

कदाचिद्दैवयोगेन धर्मार्थं पुत्रगृद्धिनी।
कन्या भवेत्तया चैव विशुद्धात्पुरुषात्पुनः ॥ ११५३ ॥

अकामहतचित्ताच्च विधिनाऽनेन धर्मतः।
पुत्रः प्राप्यो भवेदेवं शुद्धेन ब्रह्मचारिणा ॥ ११५४ ॥

आनृण्यस्य पितॄणां हि धर्मेणैव चिकीर्षता।
शुद्धस्य यस्य कस्यापि धर्मज्ञस्य विशेषतः ॥ ११५५ ॥

धर्मपत्न्याः सुतश्चैव विधिनाऽनेन धर्मतः।
प्राप्यः स्यादिति चात्रैवं रहस्यं बुध्यते परम् ॥ ११५६ ॥

अनुद्वाहितयोश्चैव स्त्रीपुंसोश्च महर्षयः।
तथा स्वतन्त्रयोश्चैव तपः संचरतोः परम् ॥ ११५७ ॥

धर्मार्थं पुत्रकामश्च यदि स्याच्च महर्षयः।
तदा पुत्राप्तयेऽन्यस्माद्विहितोऽयमिति स्वरः ॥ ११५८ ॥

तदुक्तायाः स्त्रियश्चाऽपि पुंसश्चाऽपि महर्षयः ।
विवाहिताश्च पुरुषात्तादृश्याश्च स्त्रियः पुनः ॥ ११५९ ॥

पुत्रोत्पत्तिश्च धर्म्या स्यात्प्राजापत्येन धर्मतः ।
इति धर्मरहस्ये हि वर्णितोऽयं सनातनः ॥ ११६० ॥

इत्थं चैवात्र नियमो व्याख्यातोऽस्ति महर्षिभिः ।
धर्मरहस्य वेत्तारौ पुत्रकामौ महर्षयः ॥ ११६१ ॥

प्रजार्थं दंपती यौच विशुद्धनियमव्रतौ ।
दैवेन चानपत्यौ च यदि स्यातां तदा हि तौ ॥ ११६२ ॥

प्राजापत्येन विधिना क्षेत्रं वा बीजमेव वा ।
विन्देतामिति चत्येव सिद्धान्तो धर्मसंमतः ॥ ११६३ ॥

इत्थं चाप्यत्र नियमो भवेद्धर्मस्य संमतः ।
शुद्धा जाया च वन्ध्या स्याद्यदि शारीरदोषतः ॥ ११६४ ॥

तदा पतिश्च विन्देत क्षेत्रमन्यं च धर्मतः ।
तथा पतिरशक्तः स्यात्प्रजासृष्ट्यै यदा तदा ॥ ११६५ ॥

प्रजार्थे चैव जायापि विन्देतान्यं पतिं वरम् ।
इति तस्माच्च दंपत्योरत्र शुद्धिः परा भवेत् ॥ ११६६ ॥

पतिरन्यां स्त्रियं चैव ह्यनुज्ञातश्च जायया ।
जायाप्येवमनुज्ञाता पत्या चान्यं पतिं श्रयेत् ॥ ११६७ ॥

इत्यस्मिन्नियमश्चापि प्राजापत्ये महर्षयः ।
धर्मार्थं कल्पितश्चेति भारतादवगम्यते ॥ ११६८ ॥

पुनरेवं हि नियमो दृश्यतेऽस्मिन्महर्षयः

स्त्रियः संप्रार्थिताश्चैव पतिभिः सत्यगामिभिः ॥ ११६९ ॥

अपत्यदं च भर्तारं शुद्धं चान्यमवाप्य हि।

अपत्यानि संप्रसूय पत्युश्चानृण्यमेव तैः ॥ ११७० ॥

कल्पयन्ति च धर्मेण सोऽयं धर्मः सनातनः।

पातिव्रत्यस्य गोप्ता च भवेदिति च निर्णयः ॥ ११७१ ॥

एवं विशेषनियमा भवन्त्यत्र महर्षयः।

सहस्रशो वर्णिताश्च धर्मज्ञैर्मुनिपुङ्गवैः ॥ ११७२ ॥

यथाकालं यथादेशं यथावस्थं विचक्षणैः।

१ अकामहतचित्तैश्च कार्योऽयमिति निर्णयः ॥ ११७३ ॥

इत्थं हि व्याख्यातानां च चतुर्णां धर्मगामिनाम्।

उद्वाहानां स्वरूपं हि व्याख्यातं संग्रहेण हि ॥ ११७४ ॥

धर्मरहस्यवेत्तृभिर्महाचार्यैर्महात्मभिः।

२ चतुर्भिः कूटसंस्थैश्च निर्णीतं तच्च धर्मतः ॥ ११७५ ॥

१. अकामहतचित्तैरिति—दुष्टकामानभिहतचित्तैरित्यर्थः । अत्रेदमवधेयम्—कामश्च द्विविधः, शुद्धोऽशुद्धश्चेति । तत्र शुद्धश्च धर्ममूलः, अशुद्धश्च पापहेतुः, इति । २. चतुर्भिरिति—वक्ष्यमाणकुलाचार्यैः "ब्रह्मानामा महर्षिश्च मनुश्चैव महीपतिः। वैश्यवृत्तिश्च गोतत्रो महर्षिश्च महर्षिराट् ॥ योगिराड्वामनश्चेति चत्वारो हि महर्षयः। उद्वाहानां च सर्वेषां धर्माणां च प्रवर्तकाः ॥" इति प्रसिद्धैरित्यर्थः।

ब्राह्मोद्वाहो १ ज्ञानगर्भो २ ब्रह्मोपज्ञः प्रजार्थकः ।
३ सङ्कल्पयज्ञजो देवो ४ मनूपज्ञः प्रजार्थकः ॥ ११७६ ॥

५ कर्मजः केवलं चार्षो ६ गोतन्त्रश्च प्रजार्थकः ।
प्राजापत्यो ७ योगगर्भो ८ योग्युपज्ञः प्रजार्थकः ॥ ११७७ ॥

इति धर्म्यास्ततो लोके ते च चत्वार एव हि ।
कर्तव्या धर्मकामैश्च भवेयुरिति बुद्ध्यते ॥ ११७८ ॥

अथ चैवं निषिद्धाश्च विवाहा ये महर्षयः ।
तेषां स्वरूपं व्याख्यातं संग्रहेण महर्षिभिः ॥ ११७९ ॥

यत्र कन्यापिता चापि वराय च विशेषतः ।
नियतेन च शुल्केन कन्यां यच्छति सादरम् ॥ ११८० ॥

१. ज्ञानगर्भ इति—स्वात्मस्वरूपविज्ञानगर्भः, इत्यर्थः । २. ब्रह्मोपज्ञ इति, ब्रह्मणा च महर्षिणा लोकानुग्रहार्थं प्रकाशिता इत्यर्थः । ३. सङ्कल्पयज्ञज इति—पुनश्च विशुद्धसङ्कल्पेनेत्यर्थः । पतौ च मृते, तेन सह च स्त्रीणां पतिव्रत्यस्य नष्टत्वात्सति चान्ये च पतौ पुनर्धर्मार्थं सङ्कल्पान्तरस्य करणीयत्वेनेति भावः । ४. मनूपज्ञ इति—मनुनोक्तः, इत्यर्थः । ५. कर्मज इति केवलं कर्ममात्रलक्षण इत्यर्थः । ६. गोतन्त्र इति, गोधर्म नाम्ना महर्षिणा विहित इत्यर्थः । ७. योगगर्भ इति—योगधर्मगर्भ इत्यर्थः । योगधर्मश्च सर्वमावश्यकमित्यादिभावनाप्रधानः । ८. योग्युपज्ञ इति,—योगिना वामनाचार्येण विहित इत्यर्थः ।

यत्र चैव हि कन्यायाः शुल्कं चैव यथेप्सितम्।
गृहीत्वैव पिता दद्यात्कन्यां स्वीयां च धर्मतः ॥ ११८१ ॥

यत्र स्याद्वधूवरयोर्विना चापत्यसर्जनम्।
अन्यत्प्रयोजनं च स्याल्लोभतश्च परस्परम् ॥ ११८२ ॥

उद्वाहास्ते च सर्वेऽपि स्वभावाच्च महर्षयः।
क्षुद्रत्वात्कामगर्भत्वाल्लुब्धत्वाद्धर्मगामिनः ॥ ११८३ ॥

नीरसत्वाच्च कथ्यन्ते निषिद्धाश्चेति सूरिभिः।
अत एव हि ते सर्वे भवेयुः पापलक्षणाः ॥ ११८४ ॥

पापोद्वाहेन जातेभ्यः पुत्रेभ्यश्च महर्षयः।
न चैव ऋणनिर्मोकः पितॄणां संप्रजायते ॥ ११८५ ॥

दायादाः केवलं चैव पुत्रास्ते पापिनः स्मृताः।
अत्राऽपि बहुधा भेदः कथ्यते हि महर्षयः ॥ ११८६ ॥

एवमुद्वाहधर्माश्च धर्मज्ञैश्च प्रदर्शिताः।
संस्कारलक्षणाश्चैव यथारूपं यथाक्रमम् ॥ ११८७ ॥

यथाधिकारं व्याख्याता मयात्र मुनिपुङ्गवाः।
कुर्यादुद्वाहतत्त्वज्ञैः कर्म वैवाहिकं पुनः ॥ ११८८ ॥

इत्थमुद्वाहसंस्कारो ब्राह्मश्चैव महर्षयः।
विवाहस्याङ्गभूतश्च कथ्यते नारदादिभिः ॥ ११८९ ॥

तत्र शुद्धश्च यः प्रोक्तस्तस्याङ्गानि भवन्ति च।
पञ्च तेषां स्वरूपं हि व्याख्यातं चैवमेव च ॥ ११९० ॥

तत्र च प्रथमं चाङ्गं वराह्वानं ततः परम् ।
कन्यादानप्रार्थना च कन्यादानं ततः परम् ॥ ११९१ ॥
कन्याया ग्रहणं चैव पञ्चग्राहोपशोभितम् ।
तथा प्रविश्य होमश्चेत्यङ्गानि कथितानि च ॥ ११९२ ॥
तत्र यत्प्रथमं चाङ्गं वराह्वानं महर्षयः ।
तदित्थं कथ्यते शुद्धैर्नारदाद्यैर्महर्षिभिः ॥ ११९३ ॥
कन्यायाश्चैव पित्रा च ज्ञातिभिर्वा यथाविधि ।
वराह्वानं च कार्यं स्यादिति गौतमभाषितम् ॥ ११९४ ॥
शुद्धः कन्यापिता चैवं सहपत्न्या च बन्धुभिः ।
पुरस्कृत्य च कन्यां वै यथोचितमलङ्कृताम् ॥ ११९५ ॥
भूषितं मङ्गळद्रव्यैर्गन्धद्रव्यैः सुवासितम् ।
रम्यं वैवाहिकं शुद्धं मण्डपं पुण्यलक्षणम् ॥ ११९६ ॥
सुलग्ने सुमुहूर्ते च समये प्रविशेत्ततः ।
तत्र सर्वैर्बन्धुभिश्च सह पत्न्या च कन्यया ॥ ११९७ ॥
उपविश्य च कन्यायाः १ समयं धर्मलक्षणम् ।
निवेदयेच्च सर्वेभ्यो दाता सुप्रीतमानसः ॥ ११९८ ॥
अथ सर्वैरनुज्ञातो बन्धुभिश्च विशेषतः ।
२ कुर्यान्मङ्गळयात्रां च सोपहारो यथाविधि ॥ ११९९ ॥

---

१. समयमिति 'अयमेव मे पतिर्भूयात्' इति सिद्धान्तमित्यर्थः ।
२. मंगळयात्रामिति उद्वाहदिने तत्पूर्वदिने वा निर्दिष्टस्थलाद्वरानयनार्थं गमनमित्यर्थः ।

पूगीफलसमायुक्तं तांबूलं कुसुमानि च ।
पुण्यानि शुक्लगन्धाश्च फलानि विविधानि च ॥ १२०० ॥

माङ्गळ्यानि च वासांसि कुण्डले चाङ्गुळीयकम् ।
माङ्गळ्यानि तथान्यानि चोपकारार्थकानि च ॥ १२०१ ॥

भवन्तीति च कल्पज्ञैः कथ्यन्ते मुनिपुङ्गवाः ।
एवं मङ्गळयात्रां च कृत्वा चैव यथाविधि ॥ १२०२ ॥

बन्धुभिः सहितं चैव ज्ञातिभिश्च पुरोधसा ।
वरं समधिगम्याथ १ पूजयेद्विधिवच्च तम् ॥ १२०३ ॥

अथ तेन वरेणैव सार्धं कल्याणमण्टपम् ।
अन्यैस्तद्बन्धुभिश्चैव प्रविशेच्च यथाविधि ॥ १२०४ ॥

उपविष्टेषु सर्वेषु तत्र चैव यथाक्रमम् ।
श्वश्रूभ्यां समनुज्ञातः सदस्यैश्च विशेषतः ॥ १२०५ ॥

वरः समाधितिष्ठेच्च विशुद्धं मङ्गळासनम् ।
अथोपविष्टं हृष्टं च क्षममुद्वाहकर्मणि ॥ १२०६ ॥

प्राक्तेन शुद्धभावेन स्वरूपानियतेन च ।
वरं च पूजयेत्प्रीत्या यथाविधि यथाक्रमम् ॥ १२०७ ॥

इति चाथ द्वितीयाङ्गं कन्यायाः प्रार्थना भवेत् ।
इत्थं हि वर्णिता पूर्वैः शृणुध्वं मुनिपुङ्गवाः ॥ १२०८ ॥

१. पूजयेदिति—संमानयेदित्यर्थः ।

वरश्च कृतगोदानो विशुद्धः समलङ्कृतः ।
प्रणम्य श्वशुरौ भक्त्या पूजयित्वा यथाविधि ॥ १२०९ ॥

धर्मार्थं प्रार्थयेत्कन्यां विशुद्धां धर्मगामिनीम् ।
इत्थं हि प्रार्थना चापि वर्णितास्ति महर्षिभिः ॥ १२१० ॥

ब्रह्मन्परमधर्मज्ञ भवदीयां च कन्यकाम् ।
धर्मप्रजाभिवृद्ध्यर्थं प्रार्थये स्वस्ति चास्तु नः ॥ १२११ ॥

इति चाथ वरश्चापि साकं चैव पुरोधसा ।
कन्यादानं प्रतीक्षंश्च तिष्ठन्माङ्गलिकासने ॥ १२१२ ॥

इति चाथ पिता चापि कन्यायाश्च समाहितः ।
शुद्धश्च प्राणानायम्य सात्विकत्यागपूर्वकम् ॥ १२१३ ॥

सङ्कल्पं च विधानेन कृत्वा सर्वैश्च बन्धुभिः ।
ब्राह्मणैश्च ह्यनुज्ञातः कन्यादानं समाचरेत् ॥ १२१४ ॥

तत्र कन्यापिता चापि सहितश्चैव भार्यया ।
महाविष्णुस्वरूपं च वरं संभाव्य चेतसा ॥ १२१५ ॥

अर्घ्यपाद्यादिभिश्चैव मधुपर्केण च स्वयम् ।
पूजयेच्च यथाशास्त्रं ततोऽद्भिश्चैव कन्यकाम् ॥ १२१६ ॥

" कन्यां शुद्धगुणां ब्रह्मन्सर्वाभरणभूषिताम् ।
दास्यामि विष्णवे तुभ्यं शुद्धलोकजिगीषया ॥ १२१७ ॥

तृप्तास्ते पितरः सन्तु धर्माः सर्वे फलन्तु च ।
सह धर्मचरी कन्या तव सेऽयमनिन्दिता ॥ १२१८ ॥

भूयाद्देवश्च भगवान्ब्रह्मा धाता पितामहः ।
श्रीपतिः सर्वसाक्षी च सूर्यश्चन्द्रो विभावसुः ॥ १२१९ ॥

उमानाथो महीनाथो महेन्द्रश्च शचीपतिः ।
अन्तरिक्षगता ये च सिद्धा देवा महर्षयः ॥ १२२० ॥

ब्राह्मणाश्चैव सर्वेऽपि ते च स्वस्तिपरायणाः ।
कन्यादानमिदं शुद्धं ह्यनुगृण्हन्तु सादरम् ॥ १२२१ ॥

लोकनाथश्च भगवान्नरनारायणो विभुः ।
योगदेवी सनाथश्च कन्यां त्वां चाभिरक्षतु ॥ १२२२ ॥

सहानया धर्मपत्न्या सर्वधर्माननुत्तमान् ।
यथेच्छं सञ्चर ब्रह्मन्मङ्गळानि भवन्तु ते" ॥ १२२३ ॥

इति चोक्त्वैव दद्यात्तत्सुप्रीतेनान्तरात्मना ।
तदा हि पुष्पवर्षश्च कार्यः स्याद्बन्धुभिः पुनः ॥ १२२४ ॥

इति च कन्यादानाख्यमङ्गमुक्तं महर्षयः ।
कन्यादाने च [1]मन्त्रश्च देव्याश्चाष्टाक्षरो मतः ॥ १२२५ ॥

इत्थं तुरीयमङ्गं च कन्याया ग्रहणं भवेत् ।
वरेण तच्च कार्यं स्यात्पञ्चग्राहसमन्वितम् ॥ १२२६ ॥

अथ बद्धाञ्जलिश्चैव वरो नियतमानसः ।
तत्कन्याभिमुखस्तिष्ठन्प्राणायामादिपूर्वकम् ॥ १२२७ ॥

1. मन्त्र इति—ओं-ह्रीं-श्रीं-क्लीं-ऐं-सौः-नमः, इति देव्याश्चाष्टाक्षरो मन्त्र इत्यर्थः ।

" ओं ह्रीं श्रीं क्लीं महादेवि नमस्तुभ्यं स्वयंवरे ।
ओं ईं ऐं सौः नमस्तेऽस्तु वनदुर्गे वरप्रदे ॥ १२२८ ॥

ओं नमो नारायणाय देवाय परमात्मने ।
शुद्धसङ्कल्पनाथाय सिद्धेभ्यश्च नमो नमः ॥ १२२९ ॥

नमः शिवाय देवाय सांबायाग्निस्वरूपिणे ।
शारदापतये तस्मै ब्रह्मणे ते नमो नमः ॥ १२३० ॥

सर्वविद्याव्रतस्नातो धर्मार्थी ब्रह्मवर्चसा ।
कन्यार्थी चाहमद्यैव भवेयं वः प्रसादतः ॥ १२३१ ॥

पाहि मां सर्वपापघ्ने शिवे सर्वार्थदे रमे ।
प्रजायै गृहमेधी च भवेयं त्वत्प्रसादतः ॥ १२३२ ॥

सदस्या धर्मकामाश्च कन्यां चेमां यथाविधि ।
गृण्हामि गृहमेधार्थं चानुगृण्हन्तु मां मुदा ॥ १२३३ ॥

श्वशुरौ दीयमानां च कन्यां वै तामिमां च वाम् ।
मुक्तये च पितॄणां हि लोकानामभिवृद्धये ॥ १२३४ ॥

प्रार्थये सत्यभावेन ददतं प्रीतिपूर्वकम् ।
ओं सत्यं सत्यं वदामि चोद्धृत्य भुजमुच्यते" ॥ १२३५ ॥

इति मन्त्रस्तवं भक्त्या वदेत्सत्येन वर्चसा ।
कन्यायाः पाणिकमलं गृण्हीयात्पाणिनैव हि ॥ १२३६ ॥

तदिदं मन्त्रवाक्येन कन्यायाः पितरौ तथा ।
सदस्या बान्धवाश्चैव हस्तमुद्यम्य सादरम् ॥ १२३७ ॥

भूयास्तां दंपती शुचौ धर्मकामौ मनस्विनौ ।
अनन्यौ च समौ चैव दिव्यौ ख्यातौ स्वकर्मणा ॥१२३८ ॥

इति भावेन शुद्धेन चानुगृण्हन्तु धर्मतः ।
ततो गृहीतकन्यश्च वरो धर्मार्थतत्त्ववित् ॥ १२३९ ॥

कल्याणमासनं शुद्धं चाधिष्ठाय हि जायया ।
यथाक्रमं यथाशास्त्रं पञ्चग्राहान्समाचरेत् ॥ १२४० ॥

[1]पञ्च ग्राहा गौतमेन कल्पसूत्रे प्रदर्शिताः ।
पञ्च ग्राहांश्च कृत्वा हि दंपती धर्मवत्सलौ ॥ १२४१ ॥

१. पञ्चग्राहा इति गौतमकल्पोक्ता विवाहाङ्गभूता पञ्चग्राहा इत्यर्थः । ते चेत्थमवगम्यते—अथ च प्रथमं पत्नी प्रक्षाल्य पाणिपादं चाचम्य, प्राणानायम्य, सात्विकत्यागपूर्वकं च सङ्कल्प्य, समभ्यर्च्य च हव्यवाहनम्, अग्नेरुत्तरतः पश्चिमाभिमुखं तिष्ठेद्बद्धाञ्जलिपुटा । एवं भर्तापि कृत्वा तिष्ठेन् । अथ भर्ता च उभाभ्यां च कराभ्यां पत्न्याश्चाञ्जलिबंद्धं गृहीत्वा, पुनः स्वहस्तं प्रक्षाल्य पूर्वाभिमुखो ग्राहान्समाचरेत् ।

(१) भर्ता—भद्रे मया त्वमुपनीतासि ।
पत्नी—तथास्मि सत्यं ओम् ।

(२) भर्ता—सत्यं ब्रवीमि सुभगे नाहमस्मि त्वया बिना ।
यावज्जीवं त्वयैवाहं वर्ते धर्मपरः शुचिः ॥

पत्नी—सत्यं ब्रवीमि धर्मार्थिन्नहमस्मि त्वया विना ।
यावज्जीवं त्वयैवाहं वर्ते धर्मार्थकाङ्क्षिणी ॥

सदस्यैरभ्यनुज्ञातौ श्वशुराभ्यां विशेषतः।
परस्परं समालिङ्ग्य होमं प्रावेशिकं तथा ॥ १२४२ ॥

यथाविधि यथाधर्मं समन्त्रं च यथाक्रमम्।
कुर्यातां ब्रह्मभावेन चेतसा हि महर्षयः ॥ १२४३ ॥

अत्र कर्तव्यकर्माणि दंपत्योश्च यथाक्रमम्।
व्याख्यातानि भवन्त्येवं तत्र वै मुनिपुङ्गवाः ॥ १२४४ ॥

प्राणायामपूर्वकश्च सङ्कल्पः प्रथमो भवेत्।
विघ्नेश्वरस्य पूजा च द्वितीया परिकथ्यते ॥ १२४५ ॥

तृतीयं विहितं चास्य २वरसूत्रस्य धारणम्।
अग्न्याधानं तुरीयं स्यात्पञ्चमो ब्रह्मलक्षणः ॥ १२४६ ॥

(३) भर्ता—मम धर्मं च शुद्धमनुवर्तस्व, नास्ति धर्मान्तरमैहिकफलप्रदं यथा स्वधर्मो वर्तते तथैव मया सह वर्तस्वसुभग भव।

पत्नी—धर्मपते तथैव वर्ते, सत्यं ब्रवीमि ओं।

(४) भर्ता—सर्वसाक्षिणां च देवानां सन्निधौ सत्येन त्वां प्रतिगृह्णामि सत्यं, ब्रवीमि, सत्यं चरामि ओं।

पत्नी—ओं सत्यं, तथैवास्तु सत्यं ब्रवीमि।

(५) भर्ता—सुभगे मया सह लोकरक्षणपरा भवः।

पत्नी—भगवन्तथैव वर्ते सत्यं ब्रवीमि। इति।

२. वरसूत्रस्येति—गन्धर्वादिपूजापूर्वकं कङ्कणधारणमित्यर्थः।

१ब्रह्मबीजैश्च होमः स्यात्षष्ठं ४सत्यवचो भवेत् ।
अश्मन्यारोहणं चैव सप्तमं चेति कथ्यते ॥ १२४७ ॥

अष्टमो लाजहोमः स्यान्नवमी समिधाहुतिः ।
नान्दीश्राद्धस्तु दशमश्चाग्नेश्चैव प्रदक्षिणम् ॥ १२४८ ॥

एकादशं भवेत्कन्यादातुश्चैव सपर्ययः ।
द्वादशः स्यात्ततश्चैव फलदानं विशेषतः ॥ १२४९ ॥

त्रयोदशमिति प्रोक्तं गौतमेन महात्मना ।
ततः पूर्णाहुतिश्चैव भवेदत्र चतुर्दशी ॥ १२५० ॥

अनुग्रहस्य महतां स्वीकारश्च महोदयः ।
पूर्णः पञ्चदशश्चेति शुद्धार्यैः समुदीर्यते ॥ १२५१ ॥

इति पञ्चदशैरङ्गैर्होमः प्रावेशिकश्च सः ।
स्यादेवोपलक्षितश्च मुख्यश्चेति निगद्यते ॥ १२५२ ॥

अष्टाक्षरो महामन्त्रो देव्याश्चैव महर्षयः ।
एषु कर्मसु सर्वेषु संस्कर्ता च भवेदिति ॥ १२५३ ॥

कथ्यते नारदाद्यैश्च शुद्धैश्चैव महर्षिभिः ।
एवं प्रावेशिकं कर्म यथाविधि विधाय हि ॥ १२५४ ॥

ब्राह्मणान्भोजयेत्सर्वान्यथाकामं यथाविधि ।
तेभ्यश्चैव सतांबूलं फलं चैव हि दक्षिणाम् ॥ १२५५ ॥

१. ब्रह्मबीजैरिति, तदुक्तदेव्यश्चाष्टाक्षरेणेत्यर्थः । सत्यवच इति, तदुक्तसत्यवचनं चेत्यर्थः ।

दद्यादेव यथाशक्ति वरो धर्मार्थतत्परः।
अथ तौ दंपती चैव साकं चैव स्वबन्धुभिः ॥ १२५६ ॥

भोजनं चैव माङ्गल्यं चरेच्च विधिपूर्वकम्।
ततश्चैव स्वबन्धुभ्यो दत्वा तांबूलमादरात् ॥ १२५७ ॥

सभूषणानि वस्त्राणि भक्ष्यानि विविधानि च।
ददतां दंपती शुद्धसुप्रीतेनान्तरात्मना ॥ १२५८ ॥

ततश्च दंपती शुद्धौ निराहारौ जितेन्द्रियौ।
उद्वाहदिवसे राञ्यां शयातां स्थण्डिले पुनः ॥ १२५९ ॥

अथ तौ ब्राह्मकाले च स्नातौ शुद्धौ स्वलङ्कृतौ।
वरसूत्रदेवतानां पुनः पूजां यथाविधि ॥ १२६० ॥

कृत्वा चैव यथास्थानं संप्रतिष्ठापनं चरेत्।
वरश्च सह पत्न्या हि ततो बन्धून्यथाविधि ॥ १२६१ ॥

यथाशक्ति च संपूज्य प्रेषयेत्प्रीतिपूर्वकम्।
ततश्चैव वरो शुद्धः सह पत्न्या च धर्मवित् ॥ १२६२ ॥

अग्निस्वीकारहोमं च यथाविधि महर्षयः।
कुर्याच्च ब्रह्मभावेन होमोऽयं धर्मलक्षणः ॥ १२६३ ॥

उद्वाहशेषकर्मेति कथ्यते नारदादिभिः।
अग्निहोत्रपराणां च होमोऽयं नियतो भवेत् ॥ १२६४ ॥

अन्येषां च गृहस्थानां नायं मुख्य इतीर्यते।
सोऽयं गर्भाधानकाले कार्य इत्येव निर्णयः ॥ १२६५ ॥

अथ तौ दंपती चैव ह्यनुज्ञातौ च बन्धुभिः ।
निवसेतां यथाधर्मं स्वेष्टस्थाने महर्षयः ॥ १२६६ ॥

इति ब्राह्मोद्वाहधर्मो नारदाद्यैश्च कीर्तितः ।
स्त्रीणामुद्वाहधर्मोऽयं चात्मोपनयनं भवेत् ॥ १२६७ ॥

ब्राह्मोद्वाहे तथात्मीये प्राकृते च महर्षयः ।
एवमेवोद्वाहधर्मो विहितो धर्मगामिभिः ॥ १२६८ ॥

अन्येष्वपि विवाहेषु विशेष नियमोऽपि च ।
भवेदुद्वाहसंस्कारे चेति गौतमभाषितम् ॥ १२६९ ॥

सोऽयमित्थं हि विज्ञेयो भवेच्च मुनिपुङ्गवाः ।
प्रावेशिकः पञ्चमश्च होम एव महर्षयः ॥ १२७० ॥

दैवोद्वाहे च कार्यः स्याद्वरेणैव यथाविधि ।
कन्यादानं च कन्याया ग्रहणं च यथाविधि ॥ १२७१ ॥

पञ्चग्राहाल्विनाचैव ह्यार्षोद्वाहे विधीयते ।
प्राजापत्ये विवाहे तु तद्गर्भाधानमेव हि ॥ १२७२ ॥

वर्णितं चैव विहितं भवेदित्याह वामनः ।
इति चोद्वाहसंस्कारा वर्णिताश्च विशेषतः ॥ १२७३ ॥

वामदेवरहस्यैश्चैर्विवाहाश्च विशेषतः ।
उद्वाहा मन्त्रसिद्धाश्च विज्ञेयाश्चेति निर्णयः ॥ १२७४ ॥

इति चोद्वाहसंस्कारो विवाहाख्यस्य कर्मणः ।
द्वितीयस्य यथातत्त्वं व्याख्यातः स्यान्महर्षयः ॥ १२७५ ॥

अथैवं मरणाख्यं च तृतीयं कर्मयद्भवेत्।
तस्यौर्ध्वदैहिको नामा संस्कारो विहितो भवेत् ॥ ११७६ ॥

यः स्यान्मरणधर्मश्च देहिनां नियतः सदा।
प्राकृतश्च तथात्मीयः शुद्धश्चेति विभेदतः ॥ १२७७ ॥

सोऽयं हि दृश्यते सद्भिस्त्रिविधश्चेति निर्णयः।
त्रैविध्यं तदिदं चैव दृश्यते हि सनातनम् ॥ १२७८ ॥

यत्र वै सनिमित्तः स्याद्धर्मोऽयं मरणाभिधः।
अपूर्णव्यवसायश्च सोऽयं प्राकृतलक्षणः ॥ १२७९ ॥

येनात्मविद्या नाधीता येनात्मा नानुपासितः।
तस्य वै मरणं चैव प्राकृतं चेति कथ्यते ॥ १२८० ॥

संसारे येन दुष्टं च न जितं त्वीषणात्रयम्।
तस्यापि मरणं चैव प्राकृतं चेति गीयते ॥ १२८१ ॥

ये वा निषिद्धधर्माश्च दुराचराश्च घातुघाः।
अपुत्राश्चाल्पायुषश्च मृता ये चैव देहिनः ॥ १२८२ ॥

ये चैवोत्पातविमृता ये वा कुत्सितजीवनाः।
सर्वे चैते मृता लोके प्राकृताः स्युरितीर्यते ॥ १२८३ ॥

प्राकृतानां च सर्वेषां मानुषाणां महर्षयः।
न चैव मन्त्रसंस्कारो विहितः शुद्धयोगिभिः ॥ १२८४ ॥

दाहो भूमौ च निक्षेपः पुण्यतीर्थवनेषु च।
प्रक्षेपश्च मृतानां च प्राकृतानां महर्षयः ॥ १२८५ ॥

संस्कारः प्राकृतश्चैव भवेदिति निगद्यते ।
यदि सन्ति ज्ञातयश्च प्राकृतानां मृतात्मनाम् ॥ १२८६ ॥

तैश्च संवत्सरान्ते च संस्कारो मन्त्रसंयुतः ।
स चौर्ध्वदैहिकः कार्यो भवेदित्याह गौतमः ॥ १२८७ ॥

इति मरणधर्मश्च प्राकृतः समुदीरितः ।
अथेत्थं मरणधर्मश्चात्मीयो हि निगद्यते ॥ १२८८ ॥

धार्मिका वृत्तसंपन्नाः सर्वभूतहितेरताः ।
आत्मविद्याविनीताश्च धर्मदेवद्विजार्चकाः ॥ १२८९ ॥

ये च वै मनुजा लोके परित्यक्त ऋणत्रयाः ।
शिष्टस्वव्यवसायाश्च पश्यन्तश्च परं पदम् ॥ १२९० ॥

येन केन प्रकारेण मृता वै धर्मगामिनः ।
तेषां मरणधर्मश्च भवेदात्मीयलक्षणः ॥ १२९१ ॥

प्राणप्रयाणसमये दृढप्रज्ञा जितेन्द्रियाः ।
पुत्रमित्रकळत्राणि तथान्यानपि बान्धवान् ॥ १२९२ ॥

अचिन्तयित्वा शुद्धेन सुदृढेनैव चेतसा ।
देवं स्वेष्टतमं चैव यावज्जीवमुपासितम् ॥ १२९३ ॥

निर्विकल्पधिया चैव स्मरन्तो ये मनीषिणः ।
तिष्ठन्त्यतन्द्रिताश्चैव जितरागाश्च निर्भयाः ॥ १२९४ ॥

ये चान्तकाले सन्नद्धे विस्मृतप्राकृतान्वयाः ।
शिरस्यञ्जलिमाधाय चेतसाऽनन्यगामिना ॥ १२९५ ॥

ईश्वरं सर्वभूतानां हृदिस्थं रम्यविग्रहम् ।
शरणं संप्रपद्यन्ते जपन्तः परमं मनुम् ॥ १२९६ ॥

तथा समुच्चरन्तश्च दिव्यनामानि चात्मनः
तेषां मरणधर्मश्च भवेदात्मीयलक्षणः ॥ १२९७ ॥

इत्थं चापि तदात्मीयं मरणं ह्यभिवर्ण्यते ।
निषिद्धे मरणे तस्मिन्प्राकृते चैव सत्यपि ॥ १२९८ ॥

अन्तिमा स्यात्स्मृतिः पुण्या तदप्यात्मीयलक्षणम् ।
भवेत्सा पुण्यशीलानां जायते चेश्वरेच्छया ॥ १२९९ ॥

या हि प्राणप्रयाणे च स्मृतिर्हार्देश्वरस्य च ।
परसंसारकर्तव्यव्यवसायपरेशितुः ॥ १३०० ॥

परस्थाननायकस्य पुरुषस्य परात्मनः ।
सा भवेदन्तिमा चैव स्मृतिरित्यभिधीयते ॥ १३०१ ॥

आत्मीयमरणेनैव युक्ता ये चाधिकारिणः ।
तेषां हि ज्ञातिभिश्चैव सम्बन्धो विधिपूर्वकः ॥ १३०२ ॥

और्ध्वदेहिकसंस्कारो ह्यात्मीयो धर्मलक्षणः ।
कार्य इत्येव सिद्धान्तो व्याख्यातः शुद्धयोगिभिः ॥१३०३॥

इति चात्मीयमरणं व्याख्यातं संग्रहेण हि ।
विस्तरश्चास्य कल्पे च गौतमेन निरूपितः ॥ १३०४ ॥

इत्थं शुद्धं च मरणं वर्ण्यते पूर्वसूरिभिः ।
विज्ञानाद्यस्य शुद्धाश्च भवेयुर्धर्मवित्तमाः ॥ १३०५ ॥

यस्मिन्प्रारब्धसंसारव्यवसायस्य पूर्णता ।
तच्च शुद्धं हि मरणं भवेदिति निगद्यते ॥ १३०६ ॥

शुद्धानां च विनीतानां तद्योगब्रह्मविद्यया ।
यद्भवेन्मरणं तच्च शुद्धं स्यादिति कथ्यते ॥ १३०७ ॥

योगिनोऽवयवा यस्य यज्ञाङ्गद्रव्यलक्षणाः ।
तस्य वै मरणं चाऽपि शुद्धं स्यादिति बुद्धयते ॥ १३०८ ॥

तस्य चावभृतं चेति श्रुतिभिर्नाम कथ्यते ।
नारायणानुवाके च प्रसिद्धं त्विदमुच्यते ॥ १३०९ ॥

इत्थमेवापि मरणं तच्छुद्धमभिधीयते ।
नारदाद्यैर्मुनिवरैः शुद्धविद्याधिकारिभिः ॥ १३१० ॥

बुद्धया विशुद्धया युक्तो धृतिमान्नियतात्मवान् ।
ध्यानयोगपरश्चैव जितगौणात्मभावनः ॥ १३११ ॥

महोपनिषदं शुद्धां व्याहरन्प्रीतिपूर्वकम् ।
प्राणप्रयाणसमये ध्यायन्नारायणं तथा ॥ १३१२ ॥

भित्वा मूर्धन्यनाडीं च शुद्धज्योतिस्स्वरूपभाक् ।
निर्गच्छति विशुद्धात्मा योऽधिकारी महर्षयः ॥ १३१३ ॥

तस्य वै मरणं शुद्धं भवेदिति निगद्यते ।
इत्थं चैवेह मरणं शुद्धं व्याख्यातमेव हि ॥ १३१४ ॥

यश्च शुद्धाग्निबीजैश्च योगेनाऽनन्यभावनः ।
व्यवसायपरान्कोशान्दहेत्कैवल्यलक्षणः ॥ १३१५ ॥

योगिनस्तस्य मरणं शुद्धं स्यादिति कथ्यते ।
न चास्य हि भवेत्कार्यः संस्कारो मन्त्रपूर्वकः ॥ १३१६ ॥

यतो योगाग्निना चायं स्वयं दग्धो महर्षयः ।
अस्थिसञ्चयनं चापि पिण्डदानादिकर्म च ॥ १३१७ ॥

सपिण्डीकरणं चैव ततो नास्य विधीयते ।
परं तु वत्सरान्ते च ज्ञातिभिर्धर्मगामिभिः ॥ १३१८ ॥

श्राद्धं च केवलं कार्यमिति प्राहात्र नारदः ।
देहिनां पूर्वसंस्कारजातयोगस्य सेवया ॥ १३१९ ॥

तदिदं मरणं शुद्धं भवेदित्याह नारदः ।
एवं मृतस्य देहस्य पवित्रं भस्म योगिनः ॥ १३२० ॥

येन वै धार्यते भक्त्या प्रातः सादरमेव हि ।
सोऽयं स्यात्सर्वपापेभ्यो मुक्तः सर्वविभूतिमान् ॥ १३२१ ॥

तदिदं मरणं शुद्धं सर्वेभ्यः परमं भवेत् ।
इति शुद्धं च मरणं व्याख्यातं स्याद्यथामति ॥ १३२२ ॥

तच्छुद्धमरणानां च सर्वेषामधिकारिणाम् ।
ब्रह्ममेधेन संस्कारो विहितश्चौर्ध्वदेहिकः ॥ १३२३ ॥

मृतानां चैव सर्वेषां संस्कारश्च महर्षयः ।
साशौचश्च निराशौचो ब्राह्मश्चेति हि भेदतः ॥ १३२४ ॥

त्रिविधः स्यादिति प्रोक्तो गौतमेन महात्मना ।
ततः प्रेतस्य दहनं चास्थिसंचयनं तथा ॥ १३२५ ॥

पिण्डदानं च विधिवदेकोद्दिष्टं च योगिनः ।
सर्वमेतच्च साशौचं कर्मेति हि निगद्यते ॥ १३२६ ॥

सपिण्डीकरणं यच्च कर्म पित्र्यं महर्षयः ।
निराशौचं हि तच्च स्यादिति ज्ञेयं मनीषिभिः ॥ १३१७ ॥

मृतानां च परप्राप्तिसाधनं कर्म यद्भवेत् ।
ज्ञातिभिः क्रियमाणं च तद्ग्राह्यमिति गौतमः ॥ १३२८ ॥

इत्थं मरणसंस्कारश्चौर्ध्वदेहिकलक्षणः ।
कथ्यते गौतमाद्यैश्च शुद्धैश्च मुनिपुङ्गवाः ॥ १३२९ ॥

मृतानामभिषेकश्च पुण्यतीर्थैर्महर्षयः ।
प्रथमः कथ्यते चात्र द्वितीयं चाग्निकर्म च ॥ १३३० ॥

प्रेतार्चना च पुष्पाद्यैः पवित्रैश्च महर्षयः ।
तृतीयं स्यात्कर्म चात्र प्रायश्चित्ताहुतीस्तथा ॥ १३३१ ॥

तुरीयं कर्म कथितं ततोऽत्र मुनिपुङ्गवाः ।
औदुंबरीभिः शाखाभिर्मेध्याभिश्च यथाविधि ॥ १३३२ ॥

आसन्द्याः कल्पनं चैव पञ्चमं कर्म कथ्यते ।
शकटे महिषाबद्धे रक्तैः कुसुमचन्दनैः ॥ १३३३ ॥

अलंकृते तदासन्द्यास्थापनं ज्ञातिभिः पुनः ।
कर्म षष्ठं भवेच्चेति विज्ञेयं मुनिपुङ्गवाः ॥ १३३४ ॥

अग्निकुण्डस्य वहनं सप्तमं कर्म वै भवेत् ।
श्मशानसविधे चैव प्रेतासन्दीं महर्षयः ॥ १३३५ ॥

शकटादवमुच्याथ ज्ञातयश्च यथाविधि ।
तां श्मशानं नयेयुश्च मन्त्रघोषैर्महर्षयः ॥ १३३६ ॥

मध्ये मार्गे च कर्ता च दद्याद्भूतबलिं पुनः ।
त्रिषु स्थानेषु मन्त्रेण भूमौ रुद्राय वै तथा ॥ १३३७ ॥

अष्टमं कर्म चेदं हि चितायाः कल्पनं पुनः ।
यथाविधि च मन्त्रेण नवमं कर्म वै भवेत् ॥ १३३८ ॥

तस्यां च प्रेतनिक्षेपो मन्त्रेण च यथाविधि ।
दशमं कर्म च भवेदिति चाहात्र गौतमः ॥ १३३९ ॥

ततश्चन्दनकाष्ठैश्च प्रेतस्य विधिपूर्वकम् ।
अलंकारश्च मन्त्रेण कर्म चैकादशं भवेत् ॥ १३४० ॥

प्रेतस्य हृदयस्थाने कर्ता चैव यथाविधि ।
समन्त्रं चैव मन्त्राग्नेर्निक्षेपश्च महर्षयः ॥ १३४१ ॥

द्वादशं च कर्मभवेदथ चात्र यथाविधि ।
होमः पुरुषसूक्तेन गव्याज्येन महर्षयः ॥ १३४२ ॥

त्रयोदशं कर्म भवेदथ चात्र यथाविधि ।
मृतमुक्तिप्रार्थना च कर्तुश्च ज्ञातिभिः सह ॥ १३४३ ॥

चतुर्दशं कर्म भवेत्ततश्च मुनिपुङ्गवाः ।
बन्धूनां रोदनं चैव भवेत्पञ्चदशं ततः ॥ १३४४ ॥

चिताप्रदक्षिणं चैव ज्ञातिभिः सह भक्तितः ।
कर्तृकार्यं च यच्च स्यात्तच्च षोडशमुच्यते ॥ १३४५ ॥

ततश्च विधिपूर्वं हि नग्नश्राद्धं च यद्भवेत्।
तच्च सप्तदशं कर्म भवेदिति निगद्यते ॥ १३४६ ॥

ततश्चाश्मस्थापनं च प्रेतसान्निध्यलक्षणम्।
सह पिण्डबलिभ्यां च समन्त्रं प्रेततर्पणम् ॥ १३४७ ॥

अष्टादशं कर्म भवेदिति चात्राह गौतमः।
इत्थं दहनसंस्कारः साशौचश्च महर्षयः ॥ १३४८ ॥

अष्टादशभिरङ्गैश्च युक्त इत्येव निर्णयः।
अन्यत्सर्वं हि कर्तव्यं कल्पशास्त्राच्च बुध्यताम् ॥ १३४९ ॥

ततो द्वितीयः संस्कारः साशौचो यो महर्षयः।
अस्थिसंचयननामा सोऽयं दाहदिनात्परे ॥ १३५० ॥

दिवसे चैव कार्यः स्यादिति चाहात्र गौतमः।
तत्र दग्धशरीरस्य मन्त्रतीर्थेन योगिनः ॥ १३५१ ॥

प्रोक्षणं चाभिषेकश्च विधिवत्प्रथमं भवेत्।
ततोऽस्थिसंचयनाङ्गो होमश्चैव यथाविधि ॥ १३५२ ॥

प्रायश्चित्तार्थकश्चैव द्वितीयः समुदाहृतः।
अस्थिकुंभस्थापनं च कुंभे तस्मिन्यथाविधि ॥ १३५३ ॥

अस्थिसंग्रहणं चैव यथाक्रममन्त्रकम्।
यद्वै तच्च तृतीयं स्यादिति चात्राह गौतमः ॥ १३५४ ॥

अस्थिकुंभाभिषेकश्च क्षीरेणैव यथाविधि।
तुरीय इति विज्ञेयं ततश्च मुनिपुङ्गवाः ॥ १३५५ ॥

अस्थिकुंभस्य संस्कारः पञ्चमः स्यादितीर्यते ।
भूमौ वा पुण्यतीर्थे वा समुद्रे वा यथाविधि ॥ १३५६ ॥

अस्थिकुंभस्य निक्षेपः षष्ठ इत्युच्यतेऽत्र हि ।
ततः प्रेतबलिश्चैव सप्तमश्चेति निर्णयः ॥ १३५७ ॥

ततः स्नानं समन्त्रकं च ज्ञातीनामष्टमं भवेत् ।
एवं चाष्टभिरङ्गैश्च ह्यस्थिसंचयनं भवेत् ॥ १३५८ ॥

ततस्तृतीये दिवसे तुरीये वा महर्षयः ।
प्रभूतबलिदानं च ज्ञातिभिः सह तर्पणम् ॥ १३५९ ॥

कार्यमित्येव सिद्धान्तः कथितो गौतमेन च ।
तत्र वासोदकैश्चैव तथा चैव तिलोदकैः ॥ १३६० ॥

तर्पणं प्रथमं कार्यं ततश्च मुनिपुङ्गवाः ।
प्रभूतबलिदानं च द्वितीमिति कथ्यते ॥ १३६१ ॥

पाषाणोत्थापनं चैव तृतीयं समुदाहृतम् ।
स्नानं होमस्तुरीयः स्यादघमर्षणलक्षणः ॥ १३६२ ॥

अथ चानन्दहोमः स्यात्पञ्चमः शुभलक्षणः ।
ततश्च शान्तिहोमश्च षष्ठश्चात्र निगद्यते ॥ १३६३ ॥

ततो मोक्षप्रार्थना च मृतानां मुनिपुङ्गवाः ।
कर्तृकार्या च विधिवत्सप्तमी स्यादितीर्यते ॥ १३६४ ॥

ततो गृहप्रवेशश्च ज्ञातिभिः सहभोजनम् ।
अष्टमं च भवेदत्र ततश्च मुनिपुङ्गवाः ॥ १३६५ ॥

तृतीयश्चैव साशौचः संस्कारो धर्मसंमतः ।
युक्तोऽङ्गैरष्टभिश्चेति विज्ञेयं धर्मकोविदैः ॥ १३६६ ॥

अन्यदत्र हि कर्तव्यं सर्वं च मुनिपुङ्गवाः ।
कल्पशास्त्राच्च विज्ञेयं भवेच्चाथ महर्षयः ॥ १३६७ ॥

एकोद्दिष्टमिति श्राद्धं सार्धाशौचं निरूपितम् ।
एकादशदिने तच्च कार्यमित्येव निर्णयः ॥ १३६८ ॥

ततश्च द्वादशे ह्यह्नि सपिण्डीकरणं पुनः ।
श्राद्धं चैव हि कार्यं स्याद्यथाकल्पं यथाक्रमम् ॥ १३६९ ॥

ततस्त्रयोदशे चैव दिने श्राद्धं यथाविधि ।
ब्रह्मनाम हि शुद्धं च कुर्यादिति च निर्णयः ॥ १३७० ॥

एकोद्दिष्टादिकानां च त्रयाणां मुनिपुङ्गवाः ।
श्राद्धानां चैव कल्पश्च यथादेशं यथाकुलम् ॥ १३७१ ॥

वामदेवरहस्येन विज्ञेयमिति कथ्यते ।
तच्च सर्वं विशेषेण गौतमेन निरूपितम् ॥ १३७२ ॥

इत्थं षडङ्गः संस्कारश्चौर्ध्वदेहिकलक्षणः ।
आत्मीयमरणानां च विहितः शुद्धयोगिभिः ॥ १३७३ ॥

प्राकृतानामपि यदि श्रद्धया चौर्ध्वदेहिकः ।
संस्कारः क्रियते पुत्रैः सोऽयं हि मुनिपुङ्गवाः ॥ १३७४ ॥

उक्तप्रकारः कार्यः स्यादिति प्राहात्र गौतमः ।
विशेषविधयश्चापि कल्पादत्रावगम्यते ॥ १३७५ ॥

तच्छुद्धमरणानां च संस्कारश्चौर्ध्वदेहिकः ।
ब्रह्ममेधेन कार्यः स्यादिति चात्राह नारदः ॥ १३७६ ॥

ब्रह्ममेधप्रकारश्च नारदेन यथाविधि ।
व्याख्यातोऽस्ति विशेषेण गौतमेनापि कीर्तितः ॥ १३७७ ॥

तच्छुद्धमरणानां च यतीनां ब्रह्मचारिणाम् ।
प्रतिष्ठापूर्वकं चैव शरीरस्य महर्षयः ॥ १३७८ ॥

पुण्यभूम्यां स्थापनं हि श्रेष्ठं चेत्याह नारदः ।
तेषां दहनमेवेह वरमित्याह गौतमः ॥ १३७९ ॥

शुद्धे हि मरणे चास्मिन्पुत्राणां हि महर्षयः ।
ज्ञातीनां चैव सर्वेषां नैवाशौचो विधीयते ॥ १३८० ॥

ब्रह्ममेधप्रकाराश्च ह्यनन्ताः सन्ति कीर्तिताः ।
यथादेशं यथाकालं ते च ग्राह्या मनीषिभिः ॥ १३८१ ॥

अन्यत्सर्वं हि विज्ञेयं चात्र वै मुनिपुङ्गवाः ।
वामदेवरहस्यज्ञैर्विज्ञेयमिति निर्णयः ॥ १३८२ ॥

इति वः सर्वसंस्काराः संग्रहेणात्र कीर्तिताः ।
प्रीणन्तु योगिनः सर्वे योगदेवी प्रसीदतु ॥ १३८३ ॥

मुनयः—

हंसयोगिन्महाचार्य नमस्ते धर्मसिन्धवे ।
संस्काराश्चैव सर्वेऽपि समन्त्रा भवतोदिताः ॥ १३८४ ॥

प्राकृताश्च तथात्मीयाः शुद्धाश्चेति च ये मताः।
ते सर्वेऽपि स्वभावेन शारीरा इति निश्चिताः॥ १३८५॥

शुद्धधर्मे च सर्वेषामधिकारश्च कथ्यते।
उक्ता ये चैव संस्कारा गर्भाधानादयो मुने॥ १३८६॥

ते च सर्वेऽपि शुद्धानां समाः स्युरिति निर्णयः।
बुध्यते शुद्धशास्त्रैश्च तस्मिन्नेवं सति प्रभो॥ १३८७॥

धर्मविद्यासु सर्वासु संस्काराश्चैव चोदिताः।
ब्राह्मणानधिकृत्यैव कथं स्युर्विहिता मुने॥ १३८८॥

ब्राह्मणाः क्षत्रिया वैश्या शूद्राश्चेति महामुने।
शरीरभेदा दृश्यन्ते वर्णिता धर्मदर्शने॥ १३८९॥

एवं हि व्यवहारश्च चातुर्वर्ण्यमिति श्रुतौ।
दृश्यते च विशेषेण ततश्च मुनिपुङ्गव॥ १३९०॥

संस्कारेषु च सर्वेषु ये च स्युरधिकारिणः।
तेषां स्वरूपं हि पुनः समाचक्ष्व मुनीश्वर॥ १३९१॥

चातुर्वर्ण्यरहस्यार्थं विस्तरेण यथामति।
व्याख्यातु च भवानत्र पातु त्वां परमेश्वरी॥ १३९२॥

हंसयोगी—

शृणुध्वं मुनयः सर्वे संस्काराणां विधौ पुनः।
शुद्धार्याणां हि सिद्धान्तं विशुद्धं श्रुतिसंमतम्॥ १३९३॥

धर्मविद्यासु सर्वासु धर्मशास्त्रेषु योगिनः।
मानुषानधिकृत्यैव सर्वांश्चैवाऽविशेषतः ॥ १३९४ ॥

महर्षिभिश्च संस्काराः शोधकाः शक्तिवर्धकाः।
विहिताः सन्ति धर्मेण तत्र तत्त्वं विचार्यताम् ॥ १३९५ ॥

सर्वेषां मनुजानां च योग्यता चैव केवलम्।
भवेत्संस्कारमूलं चेत्याह वृद्धश्च नारदः ॥ १३९६ ॥

योग्यता प्रतिसंस्कारं भिन्नभिन्ना च दृश्यते।
सामान्यतो योग्यतायाः स्वरूपं चेत्थमुच्यते ॥ १३९७ ॥

सदाचारः शरीरस्य दार्ढ्यं सत्यस्थितिः कृपा।
आस्तिक्यं धर्मबुद्धिश्च मन्त्रबीजाक्षरस्य च ॥ १३९८ ॥

सम्यगुच्चारणं चैव जपध्यानादिकर्मसु।
श्रद्धा चेति च तत्सर्वं येषु वै संप्रदृश्यते ॥ १३९९ ॥

संस्कारेषु च सर्वेषु ते सर्वे चाधिकारिणः।
संभवन्तीति सिद्धान्तः शुद्धाचार्यनिरूपितः ॥ १४०० ॥

तस्माच्च मानुषाः सर्वे तद्योग्यतोपलक्षिताः।
संस्कारेषु च सर्वेषु भवेयुरधिकारिणः ॥ १४०१ ॥

संस्कारस्य ब्राह्मणानामाधिक्यं परिभाव्य हि।
संस्कारः स्याद्ब्राह्मणानामेवेति च निगद्यते ॥ १४०२ ॥

धर्मविद्यासु सर्वासु ततश्च मुनिपुङ्गवाः।
अन्येऽपि मनुजाश्च स्युः संस्कारेष्वधिकारिणः ॥ १४०३ ॥

ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चेति विशेषतः ।
मनुजानां हि भेदस्य शरीरादेव वर्णनम् ॥ १४०४ ॥

निर्मूलमिति सिद्धान्तः पुरा नारदभाषितः ।
अत्र तत्त्वं च वक्ष्यामि श्रृणुध्वं मुनिपुङ्गवाः ॥ १४०५ ॥

एकस्मिंश्चैव पुरुषे गुणकर्मैकलक्षणः ।
ब्राह्मणः क्षत्रियो वैश्यः शूद्रश्चेति महर्षयः ॥ १४०६ ॥

दृश्यते व्यवहारश्च स्वरूपं च गुणो भवेत् ।
कर्म स्वरूपानुरूपं देहिनां खलु दृश्यते ॥ १४०७ ॥

तस्माद्भगवता तेन सप्तरेखाधिकारिणा ।
पुरा यथागुणकर्म चैकरूपाश्च मानुषाः ॥ १४०८ ॥

चतुर्विधा विभक्ताश्चेत्याहुः शुद्धा महर्षयः ।
एवं हि मनुजानां च दृष्ट्वा वै गुणकर्मणोः ॥ १४०९ ॥

वर्णाश्रम इति श्रेष्ठो व्यवहारश्च दृश्यते ।
सभ्यतः सर्वविद्यासु तत्र वै मुनिपुङ्गवाः ॥ १४१० ॥

गुणदृष्ट्या च वर्णः स्यात्कर्मदृष्ट्या तु चाश्रमः ।
मनुजानां च सर्वेषां भवेदिति च निर्णयः ॥ १४११ ॥

यतश्च गुणकर्मभ्यां सर्वे च मनुजा भुवि ।
चतुर्विधाश्च वर्ण्यन्ते ततश्च मुनिपुङ्गवाः ॥ १४१२ ॥

चातुर्वर्ण्यमिति प्रोक्तं तदर्थश्चेत्यमुच्यते ।
वर्णयतीति वर्णः स्यात्सोऽयं मानवचालकः ॥ १४१३ ॥

वर्णनं गुणकर्मभ्यामिति तस्मान्महर्षयः।
चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः ॥ १४१४ ॥

इति प्रोक्तं भगवता मनुजानां हि लक्षणम्।
ततो ब्राह्मणशब्दाद्या भवेयुर्गुणवाचकाः ॥ १४१५ ॥

यद्यपि व्याकृतौ शब्दाः प्रोक्ताश्चैव चतुर्विधाः।
तथापि तत्त्वदृष्ट्या तु शब्दानां मुनिपुङ्गवाः ॥ १४१६ ॥

द्वैविध्यमिति सिद्धान्तो नारदेनात्र वर्णितः।
तत्र तत्त्वं च वक्ष्यामि शृणुध्वं मुनिपुङ्गवाः ॥ १४१७ ॥

शब्देषु जातिवचनः कश्चित्स्याद्गुणवाचकः।
कश्चित्संज्ञावचनश्च कश्चित्स्यात्कर्मवाचकः ॥ १४१८ ॥

इति व्याकृतिसिद्धान्तो व्यवहारपरो भवेत्।
संज्ञाजातिवाचकयोर्योगवृत्त्या च तत्त्वतः ॥ १४१९ ॥

तद्गुणकर्मणी चैव राजेते ह्यर्थदर्शनात्।
इति व्याकृतितत्त्वज्ञाः शुद्धाश्चाहुर्महर्षयः ॥ १४२० ॥

तस्मादेव हि शब्दानां द्वैविध्यमिति बुध्यताम्।
तस्मादेव ब्राह्मणाद्याः शब्दाः स्युर्गुणवाचकाः ॥ १४२१ ॥

किं च वक्ष्ये रहस्यं हि चातुर्विध्यस्य योगिनः।
पुरा भगवता प्रोक्तं नारदेन महात्मना ॥ १४२२ ॥

दासस्तीर्थस्तथा ब्रह्मा चानन्त्यं तथैव हि।
आर्तो जिज्ञासुरर्थार्थी ज्ञानी चैव तथा पुनः ॥ १४२३ ॥

ब्रह्मचारी गृहस्थश्च वानप्रस्थो यतिस्तथा ।
तत्परमहंसहंसबहूदककुटीचकाः ॥ १४२४ ॥

योगी ज्ञानी च भक्तश्च कर्मठश्च तथैव हि ।
ब्राह्मणः क्षत्रियो वैश्यः शूद्रश्चेति च योगिनः ॥ १४२५ ॥

मनुजानां च सर्वेषां चातुर्वर्ण्यं स्वभावतः ।
कथ्यते धर्मविद्यासु तत्तश्च मुनिपुङ्गवाः ॥ १४२६ ॥

एतानि च चतुष्काणि गुणकर्मपराणि च ।
भवेयुरिति सिद्धान्तः पूर्वं नारदभाषितः ॥ १४२७ ॥

किं चाभिवर्णितं चैव चातुर्वर्ण्यं महर्षयः ।
सर्वेषु प्राणिवर्गेषु तथान्येषु च वस्तुषु ॥ १४२८ ॥

स्थावरेषु जंगमेषु सामान्यं चैव दृश्यते ।
अतः सर्वेषु भूतेषु स्थावरेषु चरेषु च ॥ १४२९ ॥

पदार्थेषु च सर्वेषु तारतम्यं महर्षयः ।
तद्गुणकर्ममूलं च दृश्यते चेति निर्णयः ॥ १४३० ॥

धर्मं यथोचितं चैव विज्ञाय मनुजा भुवि ।
चरन्ति च तथा चात्र चातुर्वर्ण्यं प्रकल्पितम् ॥ १४३१ ॥

एवं सति च लोकेऽस्मिन्कैश्चित्तन्द्रपरा जनाः ।
धर्ममूलं नजानन्ति स्वधर्मं च विशेषतः ॥ १४३२ ॥

शूद्रोऽहं नाधिकारो मे चातुराश्रम्यसेवने ।
इति कश्चिच्च विज्ञाय धर्मात्रैव पतत्यहो ॥ १४३३ ॥

पञ्चभूतशरीराणां सर्वेषां सदृशात्मनाम् ।
लोकधर्मे च धर्मे च ह्यधिकारश्च दृश्यते ॥ १४३४ ॥
समश्चेति हि सिद्धान्तः शुद्धाचार्यनिरूपितः ।
तस्माच्चैव हि संस्काराः सर्वेषां स्युः समा मताः ॥ १४३५॥
यच्च पृष्टं भवद्भिश्च तत्त्वजिज्ञासुभिः पुनः ।
मया तत्र हि वक्तव्यं संग्रहेण निरूपितम् ॥ १४३६ ॥
सर्वमेतत्सदृष्टान्तं नारदेन महात्मना ।
राहवे योगिने प्रोक्तं पुरा हि मुनिपुङ्गवाः ॥ १४३७ ॥

मुनयः—

हंसयोगिन्महाचार्य नमस्ते योगिनां वर ।
धन्या ह्यनुगृहीताः स्मो वयं धर्मानुशासनात् ॥ १४३८ ॥
दासानां चैव सर्वेषां प्रत्येकं साङ्गमाह्निकम् ।
वेदा विद्याश्च शास्त्राणि कलाश्चैव महामुने ॥ १४३९ ॥
संस्काराश्चैव सर्वेऽपि सरहस्यं विविच्य हि ।
चातुर्वर्ण्यरहस्यं च सर्वमेतद्यथाविधि ॥ १४४० ।
परिभाष्य च तत्त्वेन व्याख्यातं भवता विभो ।
शुद्धधर्मरहस्यं च वेत्ति सर्वं भवान्पुनः ॥ १४४१ ॥
भगवन्धर्मतत्त्वज्ञ तदिदं वक्तुमर्हति ।
विज्ञानाद्यस्य सर्वेऽपि वयं तृप्ता भवेम हि ॥ १४४२ ॥
कथं शुद्धा महाचार्याः शुद्धं धर्मं सनातनम् ।
अशेषधर्मगुप्तं च धारयन्ति कलौ भवि ॥ १४४३ ॥

दिव्यभूतिमतां तेषां शुद्धार्याणां महामुने।
विमूढैर्धर्मविमुखैः संबन्धो मनुजैः सह ॥ १४४४ ॥

कथं भवति धर्मात्मन्सर्वेष्वपि युगेषु च।
कलिर्दुष्ट इतीत्येव कथ्यते मुनिपुङ्गव ॥ १४४५ ॥

आत्माऽनात्मविवेकादिसंपन्नेभ्योऽपि सर्वथा।
न तत्त्वमञ्जसा साक्षाच्छुद्धाह्युपदिशन्ति च ॥ १४४६ ॥

सत्येवं हि कथं लोकाश्चान्धकारनिवर्तकम्।
गुरुं पश्यन्ति भक्त्या हि विशुद्धं दुष्टबुद्धयः ॥ १४४७ ॥

सत्येवं हि कथं योगनारायणपराः पराः।
विद्यां धर्मं च लोकेभ्यः कथं ह्युपदिशन्ति च ॥ १४४८ ॥

हंसयोगी—

शृणुध्वं मुनयः सर्वे शुद्धार्याणां तदद्भुतम्।
कर्म विद्योपदेशाख्यं येन जीवन्ति मानवाः ॥ १४४९ ॥

दिव्याश्च गुरवः शुद्धा जगदभ्युदयार्थिनः।
योगदेवीसनाथेन नारायणमहर्षिणा ॥ १४५० ॥

नियुक्ताश्च यथाकालं जगत्यस्मिंश्च मानुषे।
चारयन्ति कलौ शुद्धं धर्मं परपदप्रदम् ॥ १४५१ ॥

विशेषेण च वक्ष्यामि शुद्धार्याणां कलौ भुवि।
उपदेशप्रकारं च सरहस्यं यथामति ॥ १४५२ ॥

ब्राह्माऽऽत्मीयप्राकृताश्च धर्मा येन मुनीश्वराः ।
महदभ्युदयं यान्ति यथाकालं प्रवर्तिताः ॥ १४५३ ॥

ब्रह्माण्डं सक्रमं यच्च सदेवासुरमानुषम् ।
सलोकं साधिकारं च ससप्तर्षिगणं तथा ॥ १४५४ ॥

सकालभेदं तच्चैव सर्वं लोकेश्वरस्य हि ।
ब्रह्मप्रतिनिधेस्तस्य शुद्धस्य परमात्मनः ॥ १४५५ ॥

शास्तुश्च धर्मशास्त्राणां यथालोकं यथायुगम् ।
स्थूलं शरीरमित्याह भगवान्नारदः पुरा ॥ १४५६ ॥

यथा च परमात्मा स्यात्तथात्मा चाधितिष्ठति ।
संसरंश्च शरीराणि सर्वाणि स परोऽमलः ॥ १४५७ ॥

ब्रह्मप्रतिनिधिश्चेति ब्रह्मवादिभिरुच्यते ।
तस्माच्च श्रुतिभिः सोऽयमात्मा ब्रह्मेति वर्ण्यते ॥ १४५८ ॥

स ब्रह्मा स शिवः सेन्द्रः सोऽक्षरः परमः स्वराट् ।
इत्यादिश्रुतिभिश्चैव सोऽयमात्मैव वर्ण्यते ॥ १४५९ ॥

सर्वसन्निहितत्वाच्च परप्रेप्सुमुमुक्षुभिः ।
उपास्यते विशेषेण सोऽयमात्मा सनातनः ॥ १४६० ॥

श्रुतौ तच्छब्दवाच्यश्च परमात्मेति कथ्यते ।
कैश्चिदार्यैस्तथान्यैश्च सोऽयमात्मेति गीयते ॥ १४६१ ॥

वस्तुतस्त्वत्र तत्त्वं स्यादेवमेव महर्षयः ।
परमात्माद्यक्षरान्ता भेदा ये चात्मनो मताः ॥ १४६२ ॥

ते सर्वे पुरुषांशाः स्युरिति वेदैर्निगद्यते ।
ततो यथाभवं सोऽयमात्मा पूज्योऽस्ति शाश्वतः ॥१४६३॥

एतदात्माधिकरणं शरीरं भोगसाधनम् ।
समुपेतं सर्वभावैर्ब्रह्माण्डसदृशं भवेत् ॥ १४६४ ॥

ततश्च सन्ति ये भावा ब्रह्माण्डे च महर्षयः ।
सादृश्याच्चैव ते भावा देहे सन्तीति निर्णयः ॥ १४६५ ॥

यथा ब्रह्माण्डदेहस्य देवस्य परमात्मनः ।
शक्तिः स्याद्यादृशी चैव प्रत्यगात्मनि तादृशी ॥ १४६६ ॥

तथा स्यादिति सिद्धान्तस्तत्त्वविद्भिर्निगद्यते ।
यथा वा तस्य देवस्य विशुद्धा प्राकृताणवः ॥ १४६७ ॥

विशुद्धव्यवसायस्य हेतवश्च भवन्ति हि ।
तथा देहे च सर्वस्मिन्सन्ति ते प्रत्यगात्मनः १४६८ ॥

ब्रह्माण्डे सन्ति ये लोकास्तेषां प्रत्येकमेव हि ।
अवतारपुरुषाश्च परमात्मांशसंभवाः ॥ १४६९ ॥

सन्ति तेषां पार्षदाश्च दिव्यभावा महर्षयः ।
नानारूपा महात्मानो नानावर्णाः समूर्तयः १४७० ॥

भवन्ति तत्र केचिच्च स्त्रीरूपाश्चन्द्रवर्चसः ।
केचिच्च पशुरूपाः स्युः केचित्तीर्थशरीरिणः ॥ १४७१ ॥

पुण्यवृक्षस्वरूपाश्च पुण्यक्षेत्रस्वरूपिणः ।
अर्चारूपधराः केचित्केचिदंबरवासिनः ॥ १४७२ ॥

वायुवेगा मनोवेगाः सर्वज्ञाः कामगाः शुभाः ।
अवाप्तसर्वकामाश्च क्षुत्तृष्णादि विवर्जिताः ॥ १४७३ ॥

सर्ववार्ताहराः केचिद्गच्छन्तः सर्वभूमिषु ।
शून्यप्रस्तारभेत्तारो मन्त्रतन्त्रविशारदाः ॥ १४७४ ॥

इन्द्रजालस्य वेत्तारो यन्त्रज्ञाः केचिदेव हि ।
कर्मज्ञानभक्तियोगपराः केचिदनुत्तमाः ॥ १४७५ ॥

धर्मवाचो महात्मानो लोकाभ्युदयतत्पराः ।
भवन्त्येवमसंख्येयाः सन्ति ते वै महर्षयः ॥ १४७६ ॥

एवं संवसतां तेषां चोक्तानां हि महात्मनाम् ।
आत्मीयाः प्राकृताश्चैव धर्माः सर्वाश्च शक्तयः ॥ १४७७ ॥

तथा विभूतयश्चेति सर्वं चैव महर्षयः ।
प्रत्येकं प्राणिनां चैव भवेदिति च निर्णयः ॥ १४७८ ॥

एवं सत्यपि चात्मानः कालचक्रप्रयोगतः ।
प्रबद्धाः परतन्त्राश्च दृश्यन्ते प्राकृतान्वयाः ॥ १४७९ ॥

सत्स्वेवं धर्ममूढेषु लोकेषु स्वस्वभावतः ।
अवतीर्णाः परांशाश्च ह्यधिकारपरास्तथा ॥ १४८० ॥

शुद्धा ये भुवि सन्तस्ते धर्मसंरक्षणाय हि ।
यथादेशं यथाकालं देवसङ्कल्पतत्पराः ॥ १४८१ ॥

योगदेवी सनाथेन नारायणमहर्षिणा ।
अंशकाश्च तथा चैव नियुक्ताः स्वाधिकारिभिः ॥ १४८२ ॥

साक्षादेव हि लोकेभ्यः पथ्यं शुद्धं सनातनम् ।
धर्मानुशासनं चैव कालपर्वविशारदाः ॥ १४८३ ॥

संप्रयच्छन्ति ते चैव कदाचित्स्वतपोबलात् ।
स्वेष्टं च पुरुषं शुद्धं स्वेष्टां चैव स्त्रियं तथा ॥ १४८४ ॥

यथाकामं समाविश्य तन्मुखाल्लोकशर्मणे ।
धर्मानुशासनं शुद्धं भुवि संचारयन्ति हि ॥ १४८५ ॥

एवं भगवता योगदेव्या चैवाधिकारिभिः ।
नियुक्ताश्च महात्मानो दीक्षाचार्याः परावराः ॥ १४८६ ॥

योगशक्त्या तथादित्यचन्द्राग्नीनां च तेजसा ।
शुक्रवायुपृथिवीनां तेजसा च यथाविधि ॥ १४८७ ॥

पुरुषाणां तथा स्त्रीणां चान्येषां प्राणिनां तथा ।
यथाबलं मन्त्रदीक्षां शुद्धां संस्कारलक्षणाम् ॥ १४८८ ॥

स्वयोगतेजसा चैव कुर्वन्तीति च बुध्यते ।
तथा च दीक्षिताः सर्वे देहिनो धर्मबुद्धयः ॥ १४८९ ॥

क्रमेण योगसिद्धाश्च स्वात्मध्यानपरायणाः ।
लभन्ते ब्रह्मसामीप्यं विभूतिं ब्रह्मणस्तथा ॥ १४९० ॥

भवन्ति शुद्धदीक्षायां कुलाचार्याश्च योगिनः ।
सप्त सन्तीति तत्सर्वं पुरा नारदभाषितम् ॥ १४९१ ॥

परं तु शुद्धदीक्षायां मुख्याः सन्त्यधिकारिणः ।
कुमारो दक्षिणामूर्तिर्वैद्यो नारायणस्तथा ॥ १४९२ ॥

महाचार्यास्त्रयश्चेति सिद्धान्तः शुद्धसंमतः ।
इत्थं शुद्धा महात्मानो दिव्या ब्रह्मर्षयस्तथा ॥ १४९३ ॥
महर्षयः सुरर्षयस्तथा च परमर्षयः ।
कूटर्षयश्च ऋषयः सप्तैते शुद्धयोगिनः ॥ १४९४ ॥
नास्तिकानामास्तिकानां लोकानां गुणकर्मणी ।
स्वतेजसा परीक्ष्यैव तेषां चैव यथाबलम् ॥ १४९५ ॥
शुद्धसंस्कृतबीजैश्च शुद्धयोगतपोमयैः ।
अक्षरैश्च यथादेशं दीक्षां कुर्वन्ति सादरम् ॥ १४९६ ॥
इति चैवं शुद्धधर्मप्रचारश्च महर्षयः ।
तथा योगब्रह्मविद्याप्रवृत्तिश्च शुभावहा ॥ १४९७ ॥
सर्वमेतद्यथाम्नातं मया वोऽत्र प्रदर्शितम् ।
दिङ्मात्रं विस्तरेणैतन्नारदेन च कीर्तितम् ॥ १४९८ ॥
ये च वै मनुजा लोके दीक्षिताः शुद्धविद्यया ।
ते चैव धन्याः कथ्यन्ते सुखिनः स्युर्निरामयाः ॥ १४९९ ॥
तस्माच्च शुद्धधर्मोऽयं श्रीमान्सर्वसुखावहः ।
सर्वलोकसमश्चैव स्वतन्त्रश्च विराजते ॥ १५०० ॥

---

इति श्रीसनातनधर्मदीपिकायां द्वितीयखण्डे दासाध्याये
चतुर्थपटलं संपूर्णम् ।

---

द्वितीयभागश्च संपूर्णः ॥

---

Printed at the Dixon Press, Madras,

## सनातनधर्मदीपिकाद्वितीयभागस्य

## शुद्धाऽशुद्धपत्रिका ॥

| पत्रसंख्या. | श्लोकसंख्या. | अशुद्धम्. | शुद्धम्. |
|---|---|---|---|
| ४ | २६ | श्वेतकीतो: | श्वेतकेतोः |
| ५ | ३४ | ब्रह्माकाले | ब्राह्मकाले |
| ११ | ९७ | निरुद्धन | निरुन्द्धन् |
| ,, | ९८ | अभिधाय | अपिधाय |
| १३ | ११५ | संभवति | संभवन्ति |
| १६ | १४० | निवसिष्यति | निवसिष्यसि |
| १९ | १७० | त्वदन्यस्यास्य | त्वदन्यश्चास्य |
| २४ | २१५ | मत्रं | मन्त्रं |
| २७ | २३८ | आद्यमत्रेण | आद्यमन्त्रेण |
| २९ | २५४ | सध्यां | सन्ध्यां |
| ३९ | ३२१ | समाश्र्तः | समाश्रितः |
| ४५ | ३७८ | बहुधा | बहुधा |
| ५५ | ४७१ | स्याल्रिय | स्यात्रिया |

| पत्रसंख्या. | श्लोकसंख्या. | अशुद्धम्. | शुद्धम्. |
|---|---|---|---|
| ५६ | ४७९ | धर्माश्रीभिः | धर्माः श्रीभिः |
| ,, | ४८८ | श्रीयं | श्रियं |
| ६४ | ५६८ | चैय | चैव |
| ६९ | ६०९ | यथाचरं | यथाचारं |
| ,, | ६१२ | यथाकलं | यथाकालं |
| ७८ | ७०३ | रुच्चते | रुच्यते |
| ,, | ७०४ | काला | कला |
| ,, | ७०६ | वार्णिता | वर्णिता |
| ७९ | ७०२ | अधार | आधार |
| ,, | ७११ | महामया | महामाया |
| ८३ | ७४७ | विशिषो | विशेषो |
| ९१ | ८२८ | माहनं | मावाहनं |
| १०५ | ९५२ | पोर्णिमा | पौर्णिमा |
| १२६ | ११५ | तन्नत्या | तदशीत्या |
| १३७ | २२० | व्यसाः | व्यासाः |
| १४८ | ३३० | स्थान | स्थाने |
| १५० | ३५१ | गर्भानां | गर्भाणां |
| १५२ | ४२१ | वलङ्ग | लवङ्ग |
| १६७ | ४८६ | श्यदगमान | श्युद्गमान् |

| पत्रसंख्या. | श्लोकसंख्या. | अशुद्धम्. | शुद्धम्. |
|---|---|---|---|
| १७२ | ५२६ | गर्भिणी | गर्भिणीं |
| १७४ | ५४१ | अवां | आवां |
| १८३ | ६१८ | दलङ्कर्या | दलङ्कुर्या |
| १८६ | ६४१ | शर्करयोपतं | शर्करयेपेतं |
| १९८ | ६६० | स्यादरात् | मादरात् |
| १९६ | ७३९ | वशयेत् | वेशयेत् |
| २०८ | ८४८ | बलस्येव | बलेस्येव |
| २१४ | ८८८ | प्रञ्चकोण | पञ्चकोण |
| २३१ | १०४९ | स्त्रिय: | त्स्त्रिय: |
| २४९ | १२२५ | छोक्षरो | छाक्षरो |
| २५६ | १२८२ | दुराचर | दुराचार |
| २५८ | १३०३ | ओर्ध्वदहिक | और्ध्वदैहिक |
| २६४ | १३५८ | समन्त्रकं च ज्ञातीना | समन्त्रकं ज्ञातीना |
| ,, | १३६१ | द्वितीमिति | द्वितीयमिति |
| २७१ | १४३२ | तन्द्रपरा: | तन्द्रापरा: |